अभ्री नदी स्त्री दृष्टान्त उदाहरणशास्त्रयोः।
स्यादायतिर्दीर्घतायां प्रतापागामिकालयोः॥ ३३४॥
विधुतः कम्पिते त्यक्ते नियती दैवसंयमौ।
बीभत्से विकृतोऽस्वस्थे चाप्लुतः स्नातमात्रके॥ ३३५॥
स्नातके चाप्ययोद्घात आरम्भे स्वनिते तथा।
पाणिर्निकुम्भः प्रसृतः स्त्री जङ्घा विस्तृते त्रिषु॥ ३३६॥
दान्ते ककुद्मान्स्त्री कटचां परेतो दूरगे मृते।
दैवतं देवता देवाः सरस्वन्तौ नदार्णवौ॥ ३३७॥
मारजिच्छंकरे बुद्धे शान्तेय भगवाञ्जिने।
पूज्ये द्वयोरयोन्मत्तो धत्तूरे मादिनि त्रिषु॥ ३३८॥
निर्ऋती यमदिक्शान्ती व्यरुद्मीराक्षसाम्बयोः।
आवर्तो रोमभेदेम्भोभ्रमे पतनरूपयोः॥ ३३९॥
एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ।
रजस्वला पुष्पवती माल्यधारिणि तु त्रिषु॥ ३४०॥
विवृतः कोशनिष्कृष्टे व्याकृतेपि प्रकाशिते।
विकासिते वर्णपाठधर्मे च सुषिरे तथा॥ ३४१॥
एषां भावे तु विवृतिः स्थगितासत्यमूतयोः।
वर्णपाठगुणे गुप्ते संवृतो विवृतेतरे॥ ३४२॥
एषां भावे संवृतिः स्यादेकान्तो निश्चयो रहः।
गुणैकदेशयोरव्यभिचारिणि च पुंस्ययम्॥ ३४३॥
प्रत्यन्तौ म्लेच्छदेशान्तौ देश्यौषधिविशेषयोः।
जयन्तीन्द्रात्मजे पुंसि स्त्र्यास्फोता गिरिकर्णिका॥ ३४४॥
गिरिपर्णी शारिवा च भवेदर्कतरो पुमान्।
साक्षात्कृतोत्पादितयोराढवस्ते भावितं त्रिषु॥ ३४५॥
भक्तवासितयोश्चायाहतमानीतमुक्तयोः।
परावृत्ते च लुठितं भ्रष्टे त्रिषु पराच्युते॥ ३४६॥
तिरोहिते स्रुते मुक्ते पतिते गलितं त्रिषु।
छन्दोविशेषे गलिता निर्मुक्तो मुक्तकञ्चुके॥ ३४७॥

स्यक्के निर्ग्रन्थिके वाच्यलिङ्गो वसुमती भुवि ।
त्रिषु स्फीते चित्रकरे चित्रकृद्दसुले तथा ॥ ३४८ ॥
पर्याप्तिः पूर्णताशक्त्योर्गुडूचीशाकभेदयोः ।
जीवन्ती स्याद्वृक्षरुहा विनीतः शिक्षिते हये ॥ ३४९ ॥
समभ्ये निरस्ते च त्रिष्वथो यशस्त्रके ।
कण्ठालम्बे प्रावृते च निवीतं वाच्यलिङ्गकम् ॥ ३५० ॥
स्वकर्महीने पतितो गते भ्रष्टेपि च त्रिषु ।
यवे स्यादक्षतः पुंसि क्षत्यभावे त्रिलिङ्गकः ॥ ३५१ ॥
कलधौतं रूप्यहेम्नोर्विष्णौ लक्ष्मीपतिर्नृपे ।
अग्रेकृताभ्यर्चितयोर्भवेत्त्रिषु पुरस्कृतः ॥ ३५२ ॥
दुष्टे त्रिष्वपनीतं स्यान्निर्वादे गर्हितेपि च ।
अभिनीतं संस्कृते च प्रापितेमर्षवत्यपि ॥ ३५३ ॥
प्रतिस्खलितविद्विष्टौ त्रिषु प्रतिहतावपि ।
सुकुमारेभिजातं स्यात्कुलीनबुधयोस्त्रिषु ॥ ३५४ ॥
नन्द्यावर्तं ऋस्वेदममकारे तगरद्रुमे ।
स्त्रियामपचितिर्हानौ निष्कृतावर्चने व्यये ॥ ३५५ ॥
अत्याहितं महाभीतिर्जीवे च निरपेक्षता ।
समाहितं समाधिस्थे तथा दत्तोत्तरे त्रिषु ॥ ३५६ ॥
उपाहितोनलोत्पाते भवेदारोपिते त्रिषु ।
उपस्थितः प्रतीहारे हारभेदे समाश्रिते ॥ ३५७ ॥
वाच्यलिङ्गो निन्दिते स्यादवध्वस्तोवचूर्णिते ।
अवसानं गते शाते निर्धनेवसितस्त्रिषु ॥ ३५८ ॥
विजृम्भितं विकासिते चेष्टायां प्रसृते त्रिषु ।
विशाने वेष्टिते प्राप्ते भवेत्परिगतस्त्रिषु ॥ ३५९ ॥
मध्यमानं विस्मृतं च भवेदन्तर्गतं त्रिषु ।
अवदातः सिते पीते विशुद्धे वाच्यलिङ्गकः ॥ ३६० ॥
निराकृते प्रेषिते च प्रतिक्षिप्तं त्रिलिङ्गकम् ।
ऊर्ध्वाहिते भर्त्सिते त्रिष्वधिक्षिप्तो विनिन्दिते ॥ ३६१ ॥

नागानां नगरीनद्यौ भोगवत्यौ शतक्रतोः ।
चाप ऋज्वायते न स्त्री गजे स्वैरावतः पुमान् ॥ ३६२ ॥
अस्त्राध्याये पुमान्स्त्री तु प्रत्यादेशे निराकृतिः ।
प्रतिमायां प्रतीकारे भवेत्प्रतिकृतिः स्त्रियाम् ॥ ३६३ ॥
अभिशापप्रार्थनयोरभिशस्तिः स्तुतावपि ।
जनंगमो दिवाकीर्तिर्नापितश्च भवेद्द्वयोः ॥ ३६४ ॥
प्रागल्भ्यगौरवारम्भाभिबोधाः प्रतिपत्तयः ।
अग्न्युत्पातौ धूमकेतू वप्रा गौरी च काञ्चनी ॥ ३६५ ॥
गङ्गा हरीतकी हैमवत्यस्तज्जादिषु त्रिषु ।
वैजयन्ती पताका स्यात्तर्कारी च यमो मनुः ॥ ३६६ ॥
सौरः कर्णो रविसुतः सुग्रीवश्च निपातितः ।
मारितः साधितश्च स्याद्देवखातं ह्रदो गुहा ॥ ३६७ ॥
प्रजावती भ्रातृजाया प्रजायुक्ते भवेत्त्रिषु ।
स्पृक्का भूमिश्च कार्पासी समुद्रान्ता दुरालभा ॥ ३६८ ॥
राहुग्रस्तार्कशशिनोर्व्यसनार्तोत्तरागयोः ।
उपरक्तोवगमितेप्यास्तनिद्रे प्रबोधितः ॥ ३६९ ॥
समाघातो वधे युद्धे प्रहारेप्य विहंगमे ।
पातेच्छौ स्यात्पिपतिषंस्त्रिषु न्यस्ते समाहिते ॥ ३७० ॥
त्रिषु प्रणिहितं न्यासे समाधौ च नपुंसकम् ।
सक्ताक्षिप्तावभियुक्तौ भूपाले क्षत्रिये तथा ॥ ३७१ ॥
मूर्धाभिषिक्तोप्याम्भोधौ वरुणे यादसांपतिः ।
समन्तादुच्यमाने स्यान्नियमे परिभाषितम् ॥ ३७२ ॥
आदिराजे पृथुर्दीर्घे त्रिषु कृष्णे च जीरके ।
द्वयोः स्याद्द्विजुपर्ण्यां च पृथ्वी धरणिवृत्तयोः ॥ ३७३ ॥
पर्वसंधानपिटकयन्त्रगा मन्ययो नरि ।
अर्थोभिधेयविषयरैप्रयोजनवस्तुषु ॥ ३७४ ॥
सोपानपात्रयोस्तीर्थमर्हद्भिः सेविते गुरौ ।
व्यूतौ सान्निध्युपाये च प्रस्योत्ती सानुमानयोः ॥ ३७५ ॥

वृत्तवाग्भेदयोर्गाथा मन्थो द्रविणशालयोः ।
आस्थान्याशादरावस्थायत्नेष्वास्थाय ना स्पशे ॥ ३७६ ॥
संस्था व्यवस्थामरणयागोपस्करणेषु च ।
वीथी रूपकभेदः स्यात्पङ्क्तिवेश्माग्रवर्त्मसु ॥ ३७७ ॥
सिक्थः पुलाके मदने क्लीबेऽथो पर्णकम्बले ।
द्वयोर्दर्भेषु च कुथः सक्तूनां द्रवताविधौ ॥ ३७८ ॥
मन्थानेक्षिगदे मन्थः सिद्धार्थौ बुधसर्षपौ ।
समर्थस्त्रिषु शक्तिस्थे संबद्धार्थे हिते तथा ॥ ३७९ ॥
क्षवथुस्तु क्षुते कास उपस्थस्त्वङ्कगुह्ययोः ।
निर्ग्रन्थो निष्परीवारे त्रिषु स्यात्क्षपणे पुमान् ॥ ३८० ॥
पाशयन्त्रकमुन्माथं न स्त्री ना वधघातयोः ।
वयःस्थामलकी क्षीरकाकोली यूनि तु त्रिषु ॥ ३८१ ॥
पथ्या कयस्था काकोल्यव्यथा पथ्या हरीतकी ।
कपित्थे मन्मथः कामे मधूकाभ्रमिभेदयोः ॥ ३८२ ॥
वानप्रस्थः क्षीणरागे दशमीस्थो वयोतिगे ।
राजरक्षिण्यनीकस्थो गजशिक्षाविचक्षणे ॥ ३८३ ॥
हृन्मनोवक्षसोः क्लीबे स्त्री मिहारणभेदयोः ।
वन्दी तु पणबन्धः स्याच्छारि चापि हठाहृता ॥ ३८४ ॥
व्यवसाये परित्राणे स्थाने वस्त्वपदेशयोः ।
पादतन्मुद्रयोश्चिह्ने पदं न्यासेक्षशब्दयोः ॥ ३८५ ॥
पादा रश्म्यङ्घ्रितुर्यांश ऋणांशाद्यन्तपर्वताः ।
वृक्षमूलं चाथ संवित्संकेते ज्ञानकालयोः ॥ ३८६ ॥
संभाषणे क्रियाकारे प्रतिज्ञाचारनामसु ।
दशाग्निप्पेषणाद्दिला शिला चाथ विदारणे ॥ ३८७ ॥
उपजापे विशेषे च भेदः स्यात्तु गदो हरेः ।
भ्राता व्याधिश्चायुधे तु स्त्री सपत्न्यौस्तयोश्चयः ॥ ३८८ ॥
मूलसूरणयोः कन्दः पर्णीटगरलभ्रदाः ।
हृदस्तोयाशयः स्रोतो बिन्दुर्वेदितृविप्रुषोः ॥ ३८९ ॥

दन्तक्षतेर्यप्रकृतौ शून्ये भ्रूमध्यतेजसि ।
त्रिष्विष्टमधुरौ स्वादू मृदू चातीक्ष्णकोमलौ ॥ ३९० ॥
अभिप्रायवशौ छन्दावन्दौ जीमूतवत्सरौ ।
घर्मस्वेदनयोः स्वेदः सात्त्विके भावभिद्यपि ॥ ३९१ ॥
भेदो विरामे खण्डे च शादो जम्बालशष्पयोः ।
विमर्दचूर्णयोः क्षोदो नादः स्याल्लाणशब्दयोः ॥ ३९२ ॥
स्त्री शरद्वत्सरर्त्वोः स्यात्कश्यान्मांसाशिरक्षसोः ।
सूदः सूपे सूपकारे वेदो चोपरभूमिके ॥ ३९३ ॥
श्रमे मवेत्सुमान्कुन्दः पुष्पभेदे नपुंसकम् ।
मन्दोपटौ शनैर्यमे मूढे च त्रिषु पुंसि तु ॥ ३९४ ॥
सौरेमजात्योः स्यात्स्नैर्ये गर्वे हर्षमदानयोः ।
मदो मद्ये राजलिङ्गे पृष्ठाङ्गभेदयोः ककुत् ॥ ३९५ ॥
दायादौ बान्धवसुतावामोदो हर्षगन्धयोः ।
निषादो लुब्धके गीतस्वरे सकरजन्मनि ॥ ३९६ ॥
प्रधाने राजलिङ्गे च पृष्ठाङ्गे ककुदोस्त्रियाम् ।
मर्यादा धारणासीम्नोर्विपदो व्यक्तशुक्रयोः ॥ ३९७ ॥
गोष्ठाध्यक्षे च विष्णौ च गोविन्दः कपिनागयोः ।
कुमुदो जलजे क्लीबं कुमुदं वृद्धिजीवने ॥ ३९८ ॥
कुसेशके त्रिषु ज्ञाने तिमौ च प्रविपस्त्रियाम् ।
स्यात्प्रसादोनुपहेपि नैर्मल्यप्रीतिदानयोः ॥ ३९९ ॥
सारावे रुदिते भातर्याक्रन्दो दारुणे रणे ।
पश्चाद्राजविशेषे च गोष्पदे मानसेविते ॥ ४०० ॥
त्रिष्वधृष्टे मवे शुद्धे शारदोपि शरद्भवे ।
अस्त्री संवत्सरे समपर्णे ना शारदी पुनः ॥ ४०१ ॥
लाङ्गली शारदा देवी कुविन्दौ भ्रमिवायकौ ।
प्रमदा तरुणी ना तु हर्षेधिकमदे त्रिषु ॥ ४०२ ॥
धर्मे रहस्युपनिषद्वेदान्ते च शतह्रदा ।
विद्युद्भेदे विद्युति च वह्नीन्द्रकोलतमोनुदाः ॥ ४०३ ॥

मर्यादासहितेभ्यर्णे समर्यादं त्रिलिङ्गकम् ।
अपवादो तु निन्दाशे देशे जनपदो जने ॥ ४०४ ॥
गङ्गा विष्णुपदी क्लीबे हर्यङ्घ्र्याकाशविटपे ।
अभिमर्दो युद्धपीडे धृष्टो ऽथ विशारदः ॥ ४०५ ॥
त्रिषु कोकनदं रक्तकुमुदे रक्तवारिजे ।
निर्वादे वादनोपाये परिवादोप हेमनि ॥ ४०६ ॥
अष्टापदं शारिफले स्त्रियां तु पशुगर्भिणी ।
अपवादस्तु गर्हायां बाधके बाधनेपि च ॥ ४०७ ॥
ऋद्धिरोषधिभिद्वृद्धिलक्ष्मीः प्रभावोतिशयः स्त्रियाम् ।
कुष्ठाख्यायामोषधौ च व्याधिः पुंस्यामये तथा ॥ ४०८ ॥
वसन्तदैत्यभिद्विद्यमधूका मधवो मधु ।
मद्यं पुष्परसः क्षौद्रं मधुरे वाच्यलिङ्गक. ॥ ४०९ ॥
बन्धको व्यसनं चेतःपीडाधिष्ठानमाधय. ।
विधुर्विष्णुः शशी बाधा द्वयोर्दुःखनिषेधयोः ॥ ४१० ॥
नददेशभिदोरब्धौ सिन्धुर्ना सरिति स्त्रियाम् ।
द्वयोर्विधौ प्रकारे च गजाद्ये वेतने विधा ॥ ४११ ॥
वधूर्जाया स्नुषा स्त्री च प्रियङ्गुस्पृक्कयोरपि ।
निधौ निक्षेपगूढार्थौ स्थाने श्रद्धादरः स्पृहा ॥ ४१२ ॥
क्लीबे तमोम्भसोरन्धमदृष्टौ वाच्यलिङ्गकः ।
संधा प्रतिज्ञा मर्यादा मक्षोलामृतयोः सुधा ॥ ४१३ ॥
विधिर्विधायके वाक्ये दैवे स्रष्टृविधानयोः ।
हव्यकव्यविधौ श्राद्धं त्रिषु श्रद्धासमन्विते ॥ ४१४ ॥
सन्धिर्भगे सुरङ्गायां संधानगुणभेदयोः ।
गोधा तले निहाकायां बुधा विद्वद्रहामराः ॥ ४१५ ॥
राधा तु कृष्णजायायां शरव्ये कर्णमातरि ।
मूलाधिकेर्थे वृद्धिः स्यादृधनौषधिभेदयोः ॥ ४१६ ॥
सिद्धिरोषधिनिष्पत्त्योर्बन्धः स्नेहाधिबन्धने ।
वृन्ते च रचनाया च वातादिनियतावधौ ॥ ४१७ ॥

अंसे महीपतौ स्कन्धस्तरुजङ्घासमूहयोः ।
लताविटपयोर्वीरुत्खण्डोर्थोर्थे समेंशके ॥ ४१८ ॥
दोषज्ञे सुगते बुद्धः शुद्धविश्वेकपूतयोः ।
पण्डिते स्थविरे वृद्धस्त्रिषु साधुस्तु शोभने ॥ ४१९ ॥
वार्द्धुषी सज्जने सिद्धो देवे निष्पन्नपूज्ययोः ।
विपलिप्ते शरे दिग्धो लिप्तमात्रे त्रिलिङ्गकः ॥ ४२० ॥
मुग्धं मनोहरे मूढे त्रिषु योषिति तु स्त्रियाम् ।
विद्धं सूच्यादिभिर्भिन्ने सादृश्ये श्रे त्रिलिङ्गकः ॥ ४२१ ॥
घ्राणमाह्यल्पयोर्गन्धो द्रव्ये संबन्धमात्रके ।
लुब्धः स्पृहावान्मृगयुः क्षत्रियायां तु वैश्यजः ॥ ४२२ ॥
वन्दी च मागधः स्त्री स्यात्पिप्पली यूथिका तथा ।
व्यामो वटश्च न्यग्रोधो न्यग्रोधी चोपचित्रिका ॥ ४२३ ॥
प्रबोधी जागरोद्घाटावुत्सेधौ वपुरुन्नती ।
पर्याहाराध्वभारेषु विवधो वीवधोपि च ॥ ४२४ ॥
परिधिर्यज्ञियतरोः शाखायामुपसूर्यके ।
समाधिर्ध्याननीवाकनियमेषु समर्थने ॥ ४२५ ॥
प्रणिधी प्रार्थनचरौ परिच्छेदे विलेवधिः ।
अगाधमतलस्पर्शे त्रिषु गर्ते नपुंसकम् ॥ ४२६ ॥
व्याजे रथाङ्गेप्युपधिर्विबुधौ सुरपण्डितौ ।
वाद्यं मृदङ्गाद्यानद्धं बद्धमात्रे त्रिलिङ्गकम् ॥ ४२७ ॥
उपाधिर्धर्मचिन्ता च कुटुम्बव्यापृतेपि च ।
विशेषणोपार्जनयोः प्रबुद्धो ज्ञानिजागतोः ॥ ४२८ ॥
सम्यक्सिद्धौ स्वभावे स्त्री संसिद्धिः संनिधिस्तु ना ।
प्रत्यक्षे संनिधाने च निरोधो नाशरोधयोः ॥ ४२९ ॥
निषधः कठिने देशे राजभेदे नगान्तरे ।
तोये कबन्धं ना रक्षोभिदे शिरसि न स्त्रियाम् ॥ ४३० ॥
भृशार्थदोषावाबाधौ सबाधौ योनिसंकटौ ।
अतस्त्रिषु तु विस्रब्धो विश्वस्ते प्रोद्भटे तथा ॥ ४३१ ॥

आविद्धौ कुटिलोत्क्षिप्तौ प्रसिद्धौ ख्यातभूषितौ ।
विरुद्धौ वैरिविगुणौ दुर्विधौ खलदुर्गतौ ॥ ४३२ ॥
अविदूरस्ववष्टब्धो बद्धधाप्यवलम्बितः ।
ब्रह्मबन्धुरधिक्षेपे निर्देशे ब्राह्मणस्य च ॥ ४३३ ॥
दोषोत्पादेनुबन्धः स्यात्प्रकृत्यादेर्विनश्वरे ।
मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने ॥ ४३४ ॥
कर्णिकारः परिव्याधो जलवेतस इत्यपि ।
तमालः श्यामखदिरः कालस्कन्धोपि तिन्दुकः ॥ ४३५ ॥
इक्षुगन्धा विदारी स्यात्कोकिलो गोक्षुरोपि च ।
महौषधं प्रतिविषा लशुनं नागरं विषम् ॥ ४३६ ॥
अजमोदोग्रगन्धा स्याद्वचा गन्धोत्कटे त्रिषु ।
पृश्निरल्पतनू रश्मिवर्णभेदे गवि स्त्रियाम् ॥ ४३७ ॥
व्याधिभिद्यक्षयोर्यक्ष्मा मुनिर्बुद्ध ऋषिस्तथा ।
शुष्मा वह्निर्बले क्लीबे शृङ्गी प्रतिविषा विषम् ॥ ४३८ ॥
वृषाख्यौषधिभिद्दान्तपर्वतौ शृङ्गवांस्त्रिषु ।
हनुर्नखौषधिः सृक् जटी प्लक्षतरुर्नती ॥ ४३९ ॥
घनो मेघे मूर्तिगुणे विस्तारे लोहमुद्गरे ।
मुस्ते च न द्वयोर्वाद्ये त्रिषु मूर्तिनिरन्तरे ॥ ४४० ॥
इनः सूर्ये प्रभौ राजा मृगाङ्के क्षत्रिये नृपे ।
स्वग्देहयोस्तनुः स्त्री स्यात्तनुणे त्रिषु पर्व तु ॥ ४४१ ॥
तिथिभेदे क्षणे ग्रन्थौ वर्त्म नेत्रच्छदेध्वनि ।
वेदस्तत्त्वं तपो ब्रह्म पुमान्विप्रे प्रजापतौ ॥ ४४२ ॥
परमाक्षिलोम्नि किञ्जल्के तन्त्वाद्यंशेप्यणीयसि ।
आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च ॥ ४४३ ॥
देहप्रमाणयोर्वर्ष्म स्यादाकारेपि सुन्दरे ।
मावाणौ शैलपाषाणौ पत्रिणौ शरपक्षिणौ ॥ ४४४ ॥
नृभौमिः कुक्कुटो बर्ही शिखिनोथ तु सादिनौ ।
द्वौ सारथिहयारोहौ वाजिनोश्वेषुपक्षिणः ॥ ४४५ ॥

स्थितौ क्षेत्रवधौ मार्गे सीमा लक्ष्माप्यविह्वयोः ।
गृहं देहस्त्विट् प्रभावो धाम धन्व स्थलं धनुः ॥ ४४६ ॥
पुमान्मरावय स्वनः स्वापे सुप्तस्य संविदि ।
सूनं पुष्पे वधस्थाने स्त्रियां जिह्वातलेपि च ॥ ४४७ ॥
पुष्पिते त्रिष्वहिहरी चक्रिणौ रयतैलिकौ ।
भूतौ सुवर्णे भर्म स्याद्यर्म स्यात्फलके त्वचि ॥ ४४८ ॥
स्वामिनौ गृहमर्तारौ जनौ लोकपृथग्जनौ ।
जनी वधूश्चन्द्रयुता रात्रिर्ज्योत्स्नी पटोलिका ॥ ४४९ ॥
अश्वकुत्सितयोरर्वा प्रेमाख्यौ स्नेहनर्मणोः ।
मन्दस्वच्छन्दयोः स्वैरी श्येनी श्वेतविहंगमौ ॥ ४५० ॥
गभस्तिप्रभयोर्भानुर्वनं काननतीरयोः ।
समूहे पर्वते च स्यात्तानस्तात्पर्यगीतयोः ॥ ४५१ ॥
मणिप्रकुट्यो रत्नं यानं गमनयुग्मयोः ।
गुणभेदे च नृपतेर्धेनुर्दोग्ध्र्यां तथा गवि ॥ ४५२ ॥
रूपे धने बले शुम्नं विन्नं लब्धे विचारिते ।
सेवके याचके चार्यौ स्थानं स्थित्यवकाशयोः ॥ ४५३ ॥
सादृश्ये गीतविषये स्याच्च योग्यप्रसङ्गयोः ।
वैयापृत्यकरो भोगी त्रिषु राजभुजंगयोः ॥ ४५४ ॥
ज्योत्स्ना ज्योतिष्मती रात्रिस्तथा चन्द्रमसः प्रभा ।
मानं प्रमाणे प्रस्थादौ पुमांश्चित्तसमुन्नतौ ॥ ४५५ ॥
दिग्वासास्त्रिषु नग्नः स्यान्नग्ना वैतालिकादयः ।
संस्कृते दारिते भिन्नस्त्रिषु स्यादन्यवाचकः ॥ ४५६ ॥
शुष्के शुष्कफले धानं तथा सीवनकर्मणि ।
भगाकरौ द्वयोर्योनी कृती सारिकृतार्थयोः ॥ ४५७ ॥
स्नानीये सवने स्नानं धनं गोसंघवित्तयोः ।
पताकालक्ष्मगोधिह्नं स्यादन्नं भुक्तभक्तयोः ॥ ४५८ ॥
छादिते रहसि च्छन्नं पानं पीतौ च रक्षणे ।
खण्डने रक्षणे दानं त्यागे गजमदे तथा ॥ ४५९ ॥

शुद्धिलुन्योभोनगर्भौ हीनन्यूनौ त्रिलिङ्गकौ ।
जिह्वायां रसना क्लीबे ध्वनावास्वादने न ना ॥ ४६० ॥
कुहना दम्भचर्यायामीर्ष्यालौ तु मर्षचित्सु ।
तरुशैलौ शिखरिणौ बली वेगी तरस्विनौ ॥ ४६१ ॥
विषाणिनौ करी शृङ्गी मीणने रक्षणेवनम् ।
स्वच्छे तलिनमल्पे च गम्भीरे गहनं वने ॥ ४६२ ॥
रोदनं त्वश्रुणि क्रन्दे प्रज्ञानं बुद्धिचिह्नयोः ।
भुवने विष्टपजले धावने गतिशोधने ॥ ४६३ ॥
वैवर्णिकेण्डजे दन्ते द्विजन्मा तारकासु च ।
न ना तु परिहारे स्याद्वर्जनं त्यागहिंसयोः ॥ ४६४ ॥
कुले नाशे च निधनं सूचना स्त्रीनपुंसकम् ।
व्यधनेभिनये संज्ञापैशुन्यक्रिययोरपि ॥ ४६५ ॥
जीवनं राजलभ्यांशे जीविते तोयवर्तने ।
उद्दानमुद्गमे चुल्यां शयनं रतशय्ययोः ॥ ४६६ ॥
शासन लेखशाखाज्ञा वर्तनी वृत्तिमार्गयोः ।
तोदनं व्यधने तोत्त्रे प्रसूनं फलपुष्पयोः ॥ ४६७ ॥
दले पतत्रे छदनं विलग्नो लग्नमध्ययोः ।
मेषादौ च तनुस्थे स्यात्प्रभोराराधने भवेत् ॥ ४६८ ॥
सेवनं सीवने पाशे बन्धनं स्नेहवृन्तयोः ।
अब्जाकरेब्जे नलिनी धाहिनी सिन्धुसेनयोः ॥ ४६९ ॥
मैथुने रतसंबन्धौ मिथुने युग्मदंपती ।
सेनान्यौ गुहसेनेशौ ह्रादिन्यौ वज्रविद्युतौ ॥ ४७० ॥
सल्लकी च नदी च स्याच्चिन्त्ययं नादवत्यपि ।
द्वयोर्वंशेशनिः शम्पा रक्षोवृक्षौ पलाशिनौ ॥ ४७१ ॥
अरत्निः कूर्परे हस्ते सप्रकोष्ठततान्गुलौ ।
वाणिन्यौ नर्तकीदूत्यौ भोगिनी देवताभिदि ॥ ४७२ ॥
विहाय महिषीमन्या भोगिन्यो राजयोषितः ।
प्रधान धीमहामात्यप्रकृत्यात्मसु सत्तमे ॥ ४७३ ॥

अश्वादीनां च संनाहे जये च जयनं भवेत्।
व्यञ्जनं लाञ्छनश्मश्रुनिष्ठानावयवेष्वपि ॥ ४७४ ॥
संस्कारके भवेत्क्लीबे वादित्रकरणे पुमान्।
स्यात्कौलीनं लोकवादे युद्धे पश्वहिपक्षिणाम् ॥ ४७५ ॥
स्यादुद्यानं राजमार्गे घनभेदे प्रयोजने।
क्रतौ करकुके चार्त्ते वितानं त्रिषु तुच्छके ॥ ४७६ ॥
मन्दे शून्ये विस्तृतौ ना गृहान्ते नूतमे तथा।
उत्थानं पौरुषे तन्त्रे संनिविष्टोद्गमेपि च ॥ ४७७ ॥
व्युत्थानं प्रतिरोधे च विरोधाचरणेपि च।
अञ्जनं कज्जलं माता कपेः स्त्री दिग्गजे पुमान् ॥ ४७८ ॥
प्रभिन्नोनेकतां प्राप्ते गजे जातमदे तथा।
नालिकेरे हलधरे लाङ्गली जननं कुले ॥ ४७९ ॥
जन्मन्यम्बा च जननी वृद्धौ छेदे च वर्धनम्।
अर्जुनो वृक्षभित्पार्थौ तृणे क्लीबेर्जुनी गवि ॥ ४८० ॥
त्रिषु शुक्ले केतनं तु गृहे केतौ निमन्त्रणे।
आपन्न आपदं प्राप्ते प्राप्ते च स्याच्चिलिङ्गकः ॥ ४८१ ॥
देहवायौ समानो ना सत्तुल्यैकेषु तु त्रिषु।
व्योमयानं विमानोस्त्री सप्तभूमे च वेश्मनि ॥ ४८२ ॥
इन्द्रिये विषये क्लीबे त्रिषु स्याद्विषयान्विते।
तपनोर्को नरकभित्प्राचीनं प्रान्ततो वृतिः ॥ ४८३ ॥
पाठायां स्त्री प्राग्भवे त्रिष्वन्तर्द्वारे रहस्यपि।
प्रच्छन्नं छादिते गूढे त्रिष्वय श्वसनो मरुत् ॥ ४८४ ॥
श्वासयुक्ते मदनके पूतना तु हरीतकी।
भूतभेदे ह्रयोर्लाला स्यन्दिनी निम्नगा तथा ॥ ४८५ ॥
द्राक्षायां गोस्तनी हारभेदे ना धमनी नडी।
सिराग्न्युद्दीपनं भाण्डं नडे नाथ नभोगती ॥ ४८६ ॥
कर्णीरथे च डयनं मार्जनी पांसुशोधनी।
उपस्पर्शोन्पुंसनयोः क्लीबे ना रोध्रपादपे ॥ ४८७ ॥

मार्जना वाद्यविन्यस्यां स्यात्तत्परीक्षार्थमर्दने ।
कुण्डली भुजगे यदकुण्डले तु भवेच्चिषु ॥ ४८८ ॥
त्रिषु शान्तो यदाकश्च तपस्वी स्त्री तु मल्लकी ।
संधिन्यकालदुग्धा गौर्वृषाक्रान्ता च हायनाः ॥ ४८९ ॥
वत्सरार्चिर्व्रीहिभेदाः क्रन्दने ध्यानरोदने ।
विपत्तावशुभे भ्रंशे पानस्त्रीमृगयादिषु ॥ ४९० ॥
दैवानिष्टफले सक्तौ व्यसनं कोपदूषणे ।
निवृत्तौ दापने सिद्धौ गत्यावनुगमे धने ॥ ४९१ ॥
उपायमृतसंस्कारवधभेदेषु साधनम् ।
अयनं पथि सूर्यस्याप्युदग्दक्षिणतो गतौ ॥ ४९२ ॥
पाकस्थाने कुलालस्य पवनं ना प्रभञ्जने ।
सोमनिर्मथने स्नाने सवनं यजने तथा ॥ ४९३ ॥
वामनो दिग्गजे विष्णौ निखर्वे मेघलिङ्गकः ।
अन्तके शमनः क्लीबे वधेय जघनं कटी ॥ ४९४ ॥
पश्चादर्धे नितम्बाग्रे कौपीनं गर्ह्यगुह्ययोः ।
पुमानक्षे जिघांसायां क्रीडायामपि देवनम् ॥ ४९५ ॥
मधूच्छिष्टे स्मरे वृक्षे वसन्ते मदनः पुमान् ।
पिण्डीतके कपित्थे च धत्तूरे मदकारिणि ॥ ४९६ ॥
वेदनानुभवः पीडा यापने त्यागवर्तने ।
कल्पना कर्तने क्लृप्तावुद्देशे गजसज्जने ॥ ४९७ ॥
विकल्पे स्यादाकलने विधानेऽपि विभाजने ।
समीरणः स्पर्शनः स्यात्क्लीबे तु स्पर्शदानयोः ॥ ४९८ ॥
हिंसात्मके सूचने च गन्धनं स्यात्प्रकाशने ।
संतानः संततौ देववृक्षे चापत्यगोत्रयोः ॥ ४९९ ॥
स्तननं कुन्थिते ध्वाने देवशब्देऽथ सज्जना ।
न नेभसज्जीकरणे त्रिषु साधौ नपुंसकम् ॥ ५०० ॥
पट्टगुल्मे चेतना धीः पुंसि प्राणिनि तेजनो ।
मूर्वा शाणोपलस्नेजोवती वेणौ शरे पुमान् ॥ ५०१ ॥

स्पृक्कायां पिशुना दुष्टे सूचके त्रिषु वेष्टनम् ।
उष्णीषे मुकुटे चाथ शकुनी पक्षिणि द्वयोः ॥ ६०२ ॥
शुभशंसिनिमित्ते तु क्लीबेथ वृजिनः कचे ।
चर्मकिल्बिषयोः क्लीबे भूतात्मा धातृदेहयोः ॥ ६०३ ॥
संस्थानमाकृतौ मृत्यौ संनिवेशे चतुष्पथे ।
समासौ च विभक्तो न त्रिष्विसे त्रिष्वयासनम् ॥ ६०४ ॥
करिस्कन्धे च पीठे च मलिनं समलैनसोः ।
आराधनं साधने स्यात्तोषणोपासयोरपि ॥ ६०५ ॥
अधिष्ठानं चक्रपुरप्रभावाध्यासनेष्वपि ।
आतञ्चनं प्रतीवापे जवनाप्यायने तथा ॥ ६०६ ॥
आस्कन्दने रणाक्रान्ती शोषणप्रापणे तथा ।
सूर्यवह्नी चित्रभानू मूर्खनीचौ पृथग्जनौ ॥ ६०७ ॥
कुलेप्यभिजनो जन्मभूम्यां चाथ समापनम् ।
वधेन्ते चापदानं तु खण्डनेद्भुतकर्मणि ॥ ६०८ ॥
निर्यासनं मारणे स्यान्नगरादेर्बहिष्कृतौ ।
शक्रधातुकमत्तेभवर्षुकाब्दा घनाघनाः ॥ ६०९ ॥
अभिमानोर्थादिदर्पे ज्ञाने प्रणयहिंसयोः ।
स्यादावेशनमावेशे शालायामपि शिल्पिनाम् ॥ ६१० ॥
निसूदने निरसनं निष्कासे च विरोचनाः ।
चन्द्राग्न्यर्का विश्वकर्मा मार्ताण्डसुरशिल्पिनोः ॥ ६११ ॥
निर्यातनं वैरशुद्धौ दाने न्यासार्पणेपि च ।
अभिपन्नोपराद्धाभिपस्तव्यापद्गतग्रस्ताः ॥ ६१२ ॥
आच्छादनं संवननमपवारणमित्यपि ।
आयोधनं निघातः स्याद्युद्धं चाथ सनातनम् ॥ ६१३ ॥
नित्ये त्रिषु पुमान्विष्णौ स्तनयित्नुर्बलाहके ।
तद्भूमौ च महासेनो गुहे सेनापतावपि ॥ ६१४ ॥
ब्रह्मा कामधात्मयोनी चित्ते विहननं वधे ।
संस्कारे प्रतियत्नः स्यादुपग्रहणलिप्सयोः ॥ ६१५ ॥

विपर्यस्तमपाचीन त्रिषु क्लीबे त्वपागपि ।
मेखलायां सारसनमुरस्त्रे च नपुंसकम् ॥ ५१६ ॥
उत्पत्तिः स्यादुत्पतनमूर्ध्वगमनमित्यपि ।
ग्रहणे कलनायां च बन्धे चाकलनं मृतौ ॥ ५१७ ॥
त्रिपात्प्रवचनं वेदे व्याख्याने प्रवचस्त्वपि ।
प्रतिमानं प्रतिच्छायागजदन्तान्तरालयोः ॥ ५१८ ॥
सामिधेनी स्रुक्समिधोरग्र्यजन्मा द्विजोग्रजः ।
विनीते त्रिष्वनूचानः साङ्गे वेदे च पाठकः ॥ ५१९ ॥
काषायवस्त्रार्धवृद्धा स्यात्कात्यायन्युमापि च ।
दृष्टौ श्रुते निशमनं कार्यहेत्वोः प्रयोजनम् ॥ ५२० ॥
आवर्जनं दाननती तथा भ्रंशमनोहृती ।
संमार्जनी शोधनी स्यात्क्लीबे क्षालनलेपने ॥ ५२१ ॥
संस्कृतौ क्षीरिकोत्कृष्टभोज्ये राजादनं भवेत् ।
पियालेपोपधानं स्याद्दृष्टान्तप्रतिबिम्बयोः ॥ ५२२ ॥
गण्डके चाथ कारम्भा विश्वक्सेना हरौ गणे ।
पुमानथ क्रतुध्वंसी प्रोक्तः शर्वश्च दानवः ॥ ५२३ ॥
प्रसाधनी कङ्कतिका क्लीबे त्वाराधनार्जने ।
मण्डनायां कृष्णवर्त्मा हव्यवाहनपापयोः ॥ ५२४ ॥
उपासनं शराभ्यासे नमस्यासेवयोर्न ना ।
आम्रातके शिरीषे च अक्षे च स्यात्कपीतनः ॥ ५२५ ॥
चट्टाहितुण्डिकौ व्यालग्राहिणौ मातुलप्रिया ।
मातुलानी तथा भङ्गा विषौषध्योः प्रदीपनः ॥ ५२६ ॥
बोधने प्रतिदाने च भवेत्तु प्रतिपादनम् ।
कुङ्कुमे देववृक्षे च पुंसि वा हरिचन्दनम् ॥ ५२७ ॥
अन्तावसायी चण्डाले नापिते च हिलिङ्गकः ।
वधेतिसर्जनं दाने शुद्धौ त्यागेपमार्जनम् ॥ ५२८ ॥
स्यादुपस्पर्शनं स्पर्शे स्नानाचमनयोरपि ।
विसर्जनीयाक्षरयोरभिनिष्टानमस्त्रियाम् ॥ ५२९ ॥

मेघवाहन इन्द्रः स्याद्वायुध शकुलादनी ।
कटुका लाङ्गली च स्याद्दरिद्रा वरवर्णिनी ॥ ६३० ॥
नायिका च तपस्वी स्यात्सर्पश्च पवनाशनः ।
प्रतिबिम्बे प्रतीकारे न पुंसि प्रतियातना ॥ ६३१ ॥
वेश्या नखौषधिर्हट्टविलासिन्यावपि स्मृते ।
ओड्रपुष्पे जपा मन्त्रावृत्तौ ना भयवेपथू ॥ ६३२ ॥
स्वरभिद्वणः कम्पो भावभेदश्च सात्त्विकः ।
मन्यावृत्तौ पशौ शब्दे नाटकादिस्वभावयोः ॥ ६३३ ॥
सौन्दर्याकारयो रूपं रङ्गसीसकयोस्त्रपु ।
कल्पः शास्त्रे विधौ न्याय्ये संवर्ते ब्रह्मणो दिने ॥ ६३४ ॥
गर्तोदपानयोः कूपस्तथा स्याद्गुणवृक्षके ।
क्षेपणावज्ञयोः क्षेपो लेपो लेपनमृत्क्रिये ॥ ६३५ ॥
आक्रोशे शपथे शापः पुष्पमार्तवसूनयोः ।
द्वयोर्गोपी वल्लवी स्त्री शारिवा पातरीश्वरे ॥ ६३६ ॥
गोष्ठाध्यक्षे ग्रामवृन्दपतौ गोपो भवेत्त्रिषु ।
तल्पं शय्याट्टदारेषूपर्याधारेषु वेश्मनः ॥ ६३७ ॥
तापद्रव्यभिदौ धूपौ वपा विवरमेदसोः ।
वाष्पावूष्माश्रुणी सूपो व्यञ्जने सूपकारके ॥ ६३८ ॥
ग्रन्थिपर्णे तु शष्पं स्याद्व्रीही रूढे हरित्तृणे ।
शाखायां विस्तृतौ स्तम्बे विटपं पुंनपुंसकम् ॥ ६३९ ॥
आक्षेपौ भर्त्सनाकर्षावुडुपः प्लवचन्द्रयोः ।
आवाप आलवाले स्यात्प्रक्षेपे वलये तथा ॥ ६४० ॥
रूढप्रधानयोर्नीतितन्त्रे स्यादथ कल्पने ।
वेशो चाकल्प आच्छादनाम्रे कशिपु ते पृथक् ॥ ६४१ ॥
कुतपो वाद्यविन्यासे दर्भकालप्रभेदयोः ।
छागरोममये वस्त्रे कूर्मी वीणा च कच्छपी ॥ ६४२ ॥
कलापः संहतौ बर्हे काञ्चीतूणीरयोरपि ।
प्रतापावातपख्याती सुरूपो बुधरूपिणोः ॥ ६४३ ॥

प्राप्तरूपाभिरूपौ पावनेर्षी मदगर्हणे ।
परिच्छदे परीवापो वपने सलिलास्थितौ ॥ ५४४ ॥
वृषाकपी विष्णुशिवावग्निरिन्द्रो दिवाकरः ।
हेमपुष्पी तु दुःस्पर्शा बिम्बिका पीतयूथिका ॥ ५४५ ॥
श्रीवासः सिल्हकश्च स्याद्धूपधूपोप वेतसे ।
जले च मेघपुष्पं स्यादुपक्षेप उपक्रमे ॥ ५४६ ॥
कालादेरतिवाहे च रेफः स्यात्पापवर्णयोः ।
कम्बुर्ना वलये शङ्खे शालिभूली च मण्डले ॥ ५४७ ॥
बिम्बोष्ठी प्रतिबिम्बे ना क्लीबे स्याद्बिम्बिकाफले ।
पूर्वोन्यलिङ्गः प्रागाह पुंबहुत्वेपि पूर्वजान् ॥ ५४८ ॥
आद्यर्थे तु भवेत्क्लीबे डिम्बौ तु प्लीहविप्लवौ ।
शम्बः स्यान्मुसलाग्रस्थे लोहे भेयोन्विते पवौ ॥ ५४९ ॥
कादम्बः सायकः पक्षी कदम्बः संहतौ द्रुमे ।
हिजिङ्कः सर्पखलयोर्नितम्बोद्रितटे कटौ ॥ ५५० ॥
अन्तराभवसत्त्वेश्वे गन्धर्वो दिव्यगायने ॥
मृगभेदेप हेरम्बो महिषे विघ्ननायके ॥ ५५१ ॥
संविभज्ये जने गेहे कुटुम्बं स्यान्नपुंसकम् ।
नक्षत्रे भं प्रभायां स्त्री कुम्भी स्यात्कट्फले द्वयोः ॥ ५५२ ॥
जलादिभाण्डे ना हस्तिकटराशिभिदोस्तथा ।
सावष्टम्भे भटे कुम्भा शंभुरर्हन्विधिः शिवः ॥ ५५३ ॥
विभुः स्वामी व्यापकश्च डिम्भौ तु शिशुबालिशौ ।
स्तम्भाः स्थूणागर्वभावाः स्वभूर्गोविन्दवेधसोः ॥ ५५४ ॥
कुक्षिभ्रूणाशया गर्भा बालकाभ्यन्तरेपि च ।
जृम्भा विकासे प्रसरे व्यादाने वदनस्य तु ॥ ५५५ ॥
त्रिषु गात्रविरामेजे शुभो भद्रे नपुंसकम् ।
क्षत्रिये विजिगीषौ च ना प्राण्यवयवे पुन. ॥ ५५६ ॥
नाभिः स्त्री चक्रमध्येपि निभो व्याजे समे त्रिषु ।
संसद्गोष्ठ्योर्गृहे द्यूते सभा जम्भो रयेशने ॥ ५५७ ॥

दैत्यभेदे मुखे शक्तस्वामिनोस्तु प्रभुस्त्रिषु ।
रम्भाप्सरोभित्कदली दण्डे स्याद्वैणवे पुमान् ॥ ६५८ ॥
वीणाप्रसेवे ककुभो गेयभेदेऽर्जुनद्रुमे ।
गीतस्वरे बलीवर्दे श्रेष्ठे च ऋषभः पुमान् ॥ ६५९ ॥
कनिष्ठामणिबन्धान्तरोष्ट्रयोः करभोऽथ गौः ।
सुरभिः स्त्री कामधेनुः सल्लकी चैलवालुकी ॥ ६६० ॥
सुरायां स्यात्सुगन्धौ तु मनोज्ञे त्रिषु ना मधौ ।
ना भेर्यां दुन्दुभिः स्त्री स्यादक्षबिन्दुत्रिकद्वये ॥ ६६१ ॥
स्यान्महारजने क्लीबे कुसुम्भं करके पुमान् ।
पुनर्नवायां वर्षाभूः स्त्री वर्षाभ्वी द्वयोः प्लवे ॥ ६६२ ॥
विस्तारे प्रतिबिम्बे च विष्कम्भो नाटकांशके ।
वल्लभो दयितेऽध्यक्षे हये च प्रणये पुनः ॥ ६६३ ॥
स्यादादरत्रासे च विस्रम्भो वृषभो द्रुष्यभिद्गवोः ।
आलम्भौ स्पर्शनवधावारम्भौ तु क्रमोद्यमौ ॥ ६६४ ॥
जनाभ्यन्तरयोः पुंसि विदर्भस्त्रिषु निष्कुशे ।
विप्रलम्भो विसंवादो विरहो वञ्चना तथा ॥ ६६५ ॥
कुत्साप्रश्नवितर्केषु किं मा लक्ष्मीप्रमाणयोः ।
लक्ष्मीर्हरिप्रिया संपच्छोभा ब्राह्मी तु मातृभित् ॥ ६६६ ॥
वागोषधिभिदौ ब्रह्मभवादौ तु भवेत्त्रिषु ।
रामा योषिद्दाशरथी जामदग्न्ये हलायुधे ॥ ६६७ ॥
मृगभेदे च पुंसि स्यात्कृष्णे चारौ सिते त्रिषु ।
भार्गीभीपद्मचारिण्यः पद्मा अम्भोस्त्रियां पुमान् ॥ ६६८ ॥
संख्यानिधिव्यूहनागभित्क्लीबे गजबिन्दुषु ।
स्याद्धर्ममस्त्रियां पुण्ये क्लीबे तत्साधने पुमान् ॥ ६६९ ॥
स्वभावदेवाभिन्न्यायसमाचारेषु सोमपे ।
अहिंसोपमयोश्चाय जामिः स्वसृकुलस्त्रियोः ॥ ६७० ॥
काम्ये स्वैरे च कामः स्यादभिलाषे मनोभवे ।
अभ्ययं त्वभ्युपगाने सोम ओषधिभेदयोः ॥ ६७१ ॥

यमोन्तकः कर्म च यमितयं सहजयोरपि ।
क्षितिक्षान्त्योः क्षमा युक्ते क्षमं शक्ते हिते त्रिषु ॥ ५७२ ॥
त्रिषु श्यामौ हरित्कृष्णौ स्त्रियां स्यात्सारिवानिशोः ।
कान्ता प्रियङ्गुः कालिन्दी वटभेदे तु पुंस्ययम् ॥ ५७३ ॥
समा वर्षेनुघनीचे त्रिषु सर्वसदृक्षयोः ।
गुल्मो रुक्स्तम्बसेनाभिद्रक्षास्थानेषु गह्वरे ॥ ५७४ ॥
घर्मः स्वेदाम्भसि ग्रीष्मे धर्मो भावभिदातपे ।
त्रिषु लोकमं हरिन्मात्रे न स्त्रियां हरिते यवे ॥ ५७५ ॥
सीमावधौ स्थितौ क्षेत्रे विषये केशभूषणे ।
वृक्षमात्रे पारिजाते द्रुमभेदकुलोद्भवे ॥ ५७६ ॥
कुशले क्षेममस्त्री ना त्वौषधे लब्धरक्षणे ।
ग्रामः सवसथे गेयभेदे वृन्दे सपूर्वक. ॥ ५७७ ॥
भ्रमिर्मोहस्तक्षभाण्डं स्यादनस्मिंस्तु तद्वद ।
भ्रमो मूर्छा तक्षभाण्डे जलमम्बुविनिर्गमः ॥ ५७८ ॥
रश्मिर्घृणिप्रग्रहयोः स्याद्गङ्गादुर्गयोरुमा ।
भीमो रुद्रे सभीष्मस्तु राजभेदे भयानके ॥ ५७९ ॥
अध्यात्मं सूक्ष्ममल्पे तु त्रिषु शीते हिमं त्रिषु ।
क्लीबे तुषारे भूमिः स्यात्स्थाने पात्र धरा दशा ॥ ५८० ॥
वामा योषित्त्रिषु वल्गौ स्यात्सव्यप्रतिकूलयोः ।
वाम्यश्वा हार्यश्वस्त्वर्थवाहयुग्मकृतेपि सा ॥ ५८१ ॥
कुटिले मन्दके जिह्मो दमो दण्डेन्द्रियग्रही ।
श्रमः प्रयत्ने खेदे च क्रिमिः स्यात्कीटरोगयोः ॥ ५८२ ॥
परिपाटी क्रमः कल्पः पादक्षेपः परंपरा ।
आनन्तर्ये पदसंधि शमी शिम्बा द्रुमित्स्त्रियाम् ॥ ५८३ ॥
कूर्मी भवेद्द्वयो प्राणी यमिनामासनेस्त्रियाम् ।
नेमि स्त्री रथचक्रान्ते कूपाङ्गे तिनिशे तु ना ॥ ५८४ ॥
शान्तिर्हस्त शमो राशा व्यवस्था निजमण्डले ।
आमो रोगे त्रिष्वपक्वे स्तोम सघेध्वरे स्तुतौ ॥ ५८५ ॥

पाणेर्मध्याङ्गुलिर्दृष्टरजाः कन्या च मध्यमा।
गीतस्वरे देहमध्ये देशराजभिदोः पुमान्॥ ९८६॥
अन्यूनानतिरिक्ते च तथा मध्यभवे त्रिषु।
भयसवेगादरेषु संभ्रमोथ परिभ्रमे॥ ९८७॥
व्यायामः पौरुषे कृत्ये विद्रुमो वृक्षरत्नयोः।
यन्त्रणायां प्रतिज्ञायां नियमो निश्चये व्रते॥ ९८८॥
हेलाभ्रान्त्योर्विभ्रमः स्याच्छक्तौ क्रान्तौ च विक्रमः।
तलिमः कुट्टिमे तल्पे शास्त्रे महण आगमः॥ ९८९॥
गत्यभावद्दुर्गेष्वगमो बुद्धस्तु गौतमः।
मुनौ द्वयोः संगमस्तु नदीसंभेदसङ्गयोः॥ ९९०॥
आश्रमो ब्रह्मचर्यादौ मठे स्थाने तपस्विनाम्।
वणिक्पथः पुरं वेदो निगमास्त्वित्वतो वणिक्॥ ९९१॥
नैगमो नागरो विप्रः श्रेष्ठः साधुश्च सत्तमः।
आद्ये प्रधाने प्रथमोथाधमौ न्यूनगर्हितौ॥ ९९२॥
बुधस्यथावमोऽप्येवमपिमोप्यप्रधानयोः।
उत्कृष्टे परमश्चाप्यभ्यनुज्ञानेऽव्ययं पुनः॥ ९९३॥
ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु।
रत्ने शृङ्गे श्वेतगुणे तिलके स्याल्ललाम च॥ ९९४॥
निष्क्रमो निर्गमो बुद्धिसंपद्याय परिभ्रमः।
व्यायामयत्नखेदेषु युद्धे स्वभ्यागमो भवेत्॥ ९९५॥
आभिमुख्यागतौ चोपशमः शान्तिर्विनीतता।
उपक्रमश्चिकित्सायामारम्भोपधयोरपि॥ ९९६॥
अङ्गीकृतावुपगमः समीपगमनेपि च।
जीर्णे च परिभुक्ते च यातयामं भवेत्त्रिषु॥ ९९७॥
ज्या मौर्वी भूश्च नाके द्यौरन्तरिक्षे तथा स्त्रियाम्।
ज्या गव्या गोसमूहे च रागद्रव्ये नपुंसकम्॥ ९९८॥
गोक्षीरादौ त्रिषु पुनः स्यादर्यः स्वामिवैश्ययोः।
कल्यं प्रातः सुरायां स्त्री कल्याण्यां वाच्यवि त्रिषु॥ ९९९॥

सज्जनीरोगदक्षेषु काल्यं तु स्यादहर्मुखे ।
प्रातःकाले त्रिषु भवेद्भाग्यं कर्म शुभाशुभम् ॥ ६०० ॥
यौतकादौ धने दायो दाने भोज्ये च पैतृके ।
विवाहाद्या ज्ञातिभृत्या जन्याः स्निग्धा वरस्य च ॥ ६०१ ॥
निर्वादे जनके युद्धे क्लीबे कार्यं तु स त्रिषु ।
आरम्भो निष्कृतिः शिक्षा पूजनं संप्रधारणम् ॥ ६०२ ॥
उपायः कर्म चेष्टा च चिकित्सा करणं क्रियाः ।
धात्वर्थोपगतसंस्कारा और्ध्वदैहिकमेव च ॥ ६०३ ॥
शालापुरे न ना गृह्यं त्रिषु स्वस्वैरिपक्षयोः ।
गृहासक्ताण्डजमृगे गृधा तु स्याद्गृहिर्भवा ॥ ६०४ ॥
आहते हेम्नि रजते वा रूप्यं रजतेपि च ।
त्रिषु प्रशस्तरूपे स्यान्माल्यं पुष्पेपि तत्स्रजि ॥ ६०५ ॥
हृद्यं हृत्प्रियं हृद्यं हृदयाय हितं त्रिषु ।
वशीकरणमन्त्रे ना सत्यं शपथतथ्ययोः ॥ ६०६ ॥
मन्थौषधधने द्रव्यं गुणाधारगवोस्तथा ।
विशेष्ये परमाणौ च तिष्यपुष्यौ कलौ च भे ॥ ६०७ ॥
पुण्यं तु धर्मे सुकृते त्रिषु पूतमनोज्ञयोः ।
सौम्यो बुधे मनोज्ञे च त्रिषु स्यात्सोमदैवते ॥ ६०८ ॥
पूजार्थं द्रव्यमर्घ्यं स्यादर्घार्घार्होर्हयोस्त्रिषु ।
शरामान्तर्मणौ शल्ये मण्योषधिनृपेषु ना ॥ ६०९ ॥
स्पर्धाकाङ्क्षयोरिङ्गितमध्यरङ्गौ कक्ष्या गृहान्तरे ।
प्रतिज्ञायां तुलायां च पुंसः सारसनेपि च ॥ ६१० ॥
त्रिषु रम्यो रमोद्वाहे स्त्रियां मार्गरथ्ययोः ।
देहसमानलक्ष्येषु कायस्त्रिषु कदैवते ॥ ६११ ॥
क्षयो निलयकल्पान्तरोगापचयमृत्युषु ।
त्रिषु सद्भावियोग्येषु भव्य क्लीबे शिवे फले ॥ ६१२ ॥
मृतावनशने प्रायो बाहुल्ये सदृशे त्रिषु ।
धिष्ण्यं स्थाने गृहे भे ना दैत्याचार्याग्निभेदयोः ॥ ६१३ ॥

सर्वज्ञभिरजौ वैद्यौ स्यात्ङम्या तल्पगुम्फयोः ।
तुरंगगरुडौ तार्क्ष्यौ पूज्यौ श्वशुरसज्जनौ ॥ ६१४ ॥
रिपुतस्करयोर्दस्युर्वर्यः प्रार्थ्यप्रधानयोः।
वामदक्षिणयोः सव्यमर्थ्यो न्याय्यविपश्चितोः ॥ ६१५ ॥
अधमान्त्यभुवोरन्त्यो मध्यो न्याय्यावलम्बयोः ।
अन्तरेणाधिकन्यूने मध्ये तुरिदयबाधकः ॥ ६१६ ॥
इतरासदृशावन्यौ त्रिवेद्यां त्रितये त्रयी ।
रहस्योपस्थयोर्गुह्यं मन्युर्दैन्ये क्रतौ क्रुधि ॥ ६१७ ॥
पूजाव्रतक्रिये चर्ये गेयौ गातव्यगायनौ ।
ययुरश्ववेदश्वमेधाश्वे मूल्यं विनिमये धने ॥ ६१८ ॥
काव्यं मन्ये महे पुंसि कुल्या नीरप्रणालिका ।
नदी च क्लीवमस्थ्नि स्याद्वाच्यलिङ्गं कुलोद्भवे ॥ ६१९ ॥
त्रिषु चोद्यं चोदनार्हे क्लीवे स्याच्चोदनेद्भुते ।
त्रिषु गोप्यं गोपनीये गोप्या दासस्य सूनवः ॥ ६२० ॥
प्रवीणोचितयोर्योग्यस्त्रिष्वभ्यासे भवेत्स्त्रियाम् ।
एकत्वादौ विचारे च संख्या क्लीवे तु संयुगे ॥ ६२१ ॥
प्राप्तव्येम्बुमय चाप्यं याप्ये नेतव्यगर्हिते ।
मुखं मुखान्तरं चास्यमासने स्त्री हरीतकी ॥ ६२२ ॥
पथ्यार्याभिधौषधे तु क्लीबे त्रिष्वगते पथः ।
पाक्यं काचे यवक्षारे विडे पाकार्हणे त्रिषु ॥ ६२३ ॥
भेदनीये त्रिषु भवेत्कृत्यो विद्विष्टकार्ययोः ।
स्त्रियां क्रियादेवतयोर्वाच्यं तु त्रिषु कुत्सिते ॥ ६२४ ॥
उपालभ्ये च चैत्यः स्यात्स्तूप उद्देशपादपे ।
प्राकारमूलबन्धे च संघसंचययोश्चयः ॥ ६२५ ॥
साध्या देवभिदः पुंसि भूम्नि शक्ये पुनस्त्रिषु ।
धन्या वनसमूहे स्त्री वने साधुनि तु त्रिषु ॥ ६२६ ॥
छाया स्यादातपाभावे प्रभाप्रतिमयोरपि ।
सूर्यप्रियायां गङ्गायां संवाहन्याप्ययोरपि ॥ ६२७ ॥

सद्योगे त्रिषु सोढव्य आरोग्ये तु नपुंसकम् ।
वीर्यं बलं प्रभावश्च रेतः स्याद्वीरकर्म च ॥ ६२८ ॥
देवीभेदे जयोचभ्योऽद्रियोर्मा भारते गणे ।
उत्कर्षैभिभवे चार्या ज्येष्ठब्राह्मणसज्जनाः ॥ ६२९ ॥
छन्दोभिरखी चिता निरया स्यादमिचयने न ना ।
सभ्यः सामाजिकेऽपी च तथा प्रत्ययिते त्रिषु ॥ ६३० ॥
दूष्येममभ्यबन्धन्यां क्लीबे पटगृहे त्रिषु ।
दूषणीये बले सैन्यं त्रिषु तत्समवायिनि ॥ ६३१ ॥
माया स्याद्बुद्धजननी वञ्चनाविद्ययोरपि ।
तदधिष्ठातृदेव्यां च आर्यं कुलजकान्तयोः ॥ ६३२ ॥
आदित्यौ सर्वगीर्वाणौ श्वश्रूर्यो स्यात्तदेवरी ।
त्रिषु हर्तुमशक्ये स्यादहार्यः पर्वते पुमान् ॥ ६३३ ॥
स्याद्याद्वेयी भूमिजम्बूलकारी जलवेतसः ।
त्रिषु नद्यां भवे पश्चाज्जघन्यं त्रिषु गर्हिते ॥ ६३४ ॥
अभिलाषविनिर्मुक्ते प्रणाय्यः स्यादसंमते ।
आधार आशयः स्यात्कुशभिप्रायेश्चसंहतिः ॥ ६३५ ॥
अश्वीयं स्यादश्वहिते त्रिष्वपत्यं तु पुत्रयोः ।
ब्राह्मण्यं ब्राह्मणत्वे च तथा तत्कर्मसंघयोः ॥ ६३६ ॥
मलयौ पर्वतारामौ भ्रातृव्यौ भ्रातृजद्विषौ ।
विस्रम्भयाच्ञाप्रेमाणः प्रणयाः सस्तवोपि च ॥ ६३७ ॥
संघाते सन्निवेशे च संस्त्यायः स्याद्गृहे तथा ।
पश्चादवस्थायिबलं संनयो द्रव्यमेलनम् ॥ ६३८ ॥
कषायः सुरभौ स्निग्धे भाविते त्रिषु ना रसे ।
द्रवे वर्णे विलेपनेऽथ देहे स्त्री पुनर्मले ॥ ६३९ ॥
काञ्चिकस्य द्वितीया तु जाया स्यात्पूरणे त्रिषु ।
स्थाने विहंगमावासे कुलायं पुंनपुंसकम् ॥ ६४० ॥
कशेरुदेशोर्गाङ्गेयं पुंसि भीष्मे गणाधिपे ।
त्रिषु वामे प्रसव्यं स्यात्प्रतिकूलानुकूलयोः ॥ ६४१ ॥

शोभायां नाम्नि कीर्तावप्यभिख्या क्षेत्रियस्त्रिषु।
अन्यदेहचिकित्स्यार्हे विपारी क्षेत्रिमे तृणे॥ ६४२॥
असाध्यरोगे दुःशोध्ये तृणादौ पारदारिके।
विषयो यस्य यो ज्ञातस्तत्र शब्दादिकेष्वपि॥ ६४३॥
आधारे ग्रामसंघे च व्यवायो व्यवधौ रते।
हृदयं वक्षसि स्यान्नेभिरायाभ्यन्तरोऽङ्गुके॥ ६४४॥
चित्रादर्शो विस्मयौ तु पर्यायोर्मसमे क्रमे।
निकायः स्यान्निवासे च संघे राशीकृतौ तथा॥ ६४५॥
समयाः शपथाचारकालसिद्धान्तसंविदः।
प्रत्ययोधीनशपथज्ञानविश्वासहेतुषु॥ ६४६॥
रन्ध्रे शब्दे प्रथायां च संवादे मेघकम्बलौ।
ऊर्णायू स्यात्तु सौरभ्यं सौगन्ध्यं रम्यता तथा॥ ६४७॥
मेघे तु सध्वनौ शक्रे पर्जन्यो मेघदैवते।
हिरण्यं हेम्नि तन्मानभेदेऽर्थे स्यादकुप्यके॥ ६४८॥
प्रलयौ मृत्युसंवर्तौ मूर्छा भावश्च सात्त्विकः।
न नातिथ्यमतिथ्यर्थमतिथौ तु नपुंसकम्॥ ६४९॥
व्यसनान्यशुभं दैवं विपदित्यनवाश्रयः।
क्लेशे दण्डे च दोषे च विनाशेतिक्रमेऽत्ययः॥ ६५०॥
पानीयं सलिले पेयरक्षयोस्त्रिष्वयोदयः।
पूर्वाद्रिरुद्गमो वृद्धिः स्येये स्यानहिते पुरे॥ ६५१॥
स्थानीयमुत्तरपदे त्रिषु स्यादुपमार्थकम्।
छायायां पुंसि शालेयः क्षेत्रे क्लीवमयामयम्॥ ६५२॥
मयाभाव च शरीरे च स्त्री पथ्या निर्मये त्रिषु।
राजस्याले राष्ट्रियः स्यात्त्रिषु राष्ट्रभवादिके॥ ६५३॥
शीर्षण्यो निरदे केशे शिरस्त्रे तु नपुंसकम्।
शिरोमते तद्धिते च प्रधाने चान्यलिङ्गकः॥ ६५४॥
संचय संपदे सन आत्रेयी स्याद्रजस्वला।
अभ्यपत्ये त्रिषु फले मदनस्यापि कट्फले॥ ६५५॥

कैडर्यो मुलवृक्षे तु ब्रह्मण्यो ब्रह्मणो हिते ।
श्लिष्टान्वयो वंशवाक्यपदमेलनयोस्तथा ॥ ६५६ ॥
संबन्धेप्यभिचारे च चाम्पेयो नागकेसरे ।
चम्पके चाथ विजयो गणभेदेर्जुने गतौ ॥ ६५७ ॥
पराभिभूतौ देव्यां स्त्री हृषीके द्रौपदीन्द्रियम् ।
हव्यवौ मदनारामानी स्यादाम्नायोन्वये श्रुतौ ॥ ६५८ ॥
निलयः स्यादालये स्थाने निचयौ संघसंचयौ ।
पर्वतारेश्च चमं स्यादुभयोप्युडुव्रसंचयोः ॥ ६५९ ॥
शाण्डिल्यो मुनिभेदे स्यात्पुंसि बिल्वमहीरुहे ।
मन्त्रयौ स्वरभिरसंधौ भूरिमायस्तु राक्षसः ॥ ६६० ॥
सृगालश्चाथ नलदे जलाधारे जलाशयः ।
समवायौ श्लेषसंघौ मेरुस्वर्गौ सुरालयौ ॥ ६६१ ॥
देवागारेप्यथ सुरा सीरिभार्या हलिप्रिया ।
नीपे मायोपकार्या स्यात्पटकुट्यां तथा त्रिषु ॥ ६६२ ॥
संविभज्ये रणे संधि समुदायोपि संविदि ।
आतिथेयी स्त्रियां पूजातिथिसाधौ भवेत्त्रिषु ॥ ६६३ ॥
युद्धायत्योः संपरायो वैरोमस्योः समुच्छ्रयः ।
स्थूलोच्चयस्त्वसाकल्ये दन्तिनां मध्यमे गते ॥ ६६४ ॥
समुद्गमे समुदयः संग्रामनिकुरुम्बयोः ।
दोषे द्वेषे चानुशयः पश्चात्तापानुबन्धयोः ॥ ६६५ ॥
पुंसां संघे पौरुषेयं त्रिषु तेन कृते वधे ।
विकारे तस्य हुतभुक्पार्थयोः स्याद्धनंजयः ॥ ६६६ ॥
हलीन्दुजौ रौहिणेयौ समाख्याने प्रतिभयौ ।
भयंकरे प्रतिभयं त्रिषु भीतौ नपुंसकम् ॥ ६६७ ॥
भागधेयो बलौ भागे भाग्ये क्लीबे समाह्वयः ।
रणे द्यूते वाससेयी रात्री तत्साधुनि त्रिषु ॥ ६६८ ॥
स्यादभ्यासे परिचयः संस्कारे मेलने तथा ।
चन्द्रोदयो विताने स्याद्द्विजराजोद्गमे तथा ॥ ६६९ ॥

वक्ता प्रवचनीयः स्यात्प्रवाच्यश्च त्रिलिङ्गकः ।
वृषाकपायी श्रीगौरी स्वाहेन्द्राण्यृषिभार्ययोः ॥ ६७० ॥
राः स्वर्णधनयोः श्रीस्तु शोभालक्ष्मीसमृद्धिषु ।
प्रशंसायां पुरे पूः स्याद्गृहे काये स्त्रियामथ ॥ ६७१ ॥
धूः स्यादवयवे स्त्री स्यात्तया वोढ्यमात्रके ।
दुर्द्रुमे विटपे शौरी नारायणशनैश्चरौ ॥ ६७२ ॥
उदर्महांस्त्रिषु स्त्री भूश्रीरी स्याज्झिल्लिका मृगे ।
ना क्लीबे प्रतिमां वक्रे वारः काले क्रमे चये ॥ ६७३ ॥
क्षुच्छौषधाघातपत्रे क्लीबे पदे नखौषधौ ।
खुरः शरो नडे बाणे दधिसारेय वायसे ॥ ६७४ ॥
वाल्यर्जुनजयन्तेषु स्यादिन्द्रिरय राक्षसे ।
रुरुश्चित्रमृगे गुन्द्रा प्रियङ्गुः सैरिकैरका ॥ ६७५ ॥
अक्षमालाप्रफलके मेरुः सुरगिरौ तथा ।
अम्लवेतसवृक्षाम्लाम्लाधुक्राद्विषु तद्रसे ॥ ६७६ ॥
रोमच्छेदककाण्डेक्षू क्षुरौ तीक्ष्णे मतेऽस्त्रिषु ।
शाम्ब्रोपतापिनोर्वर्णे षड्जोदात्तादिषु स्वरः ॥ ६७७ ॥
गौर्गजातरजाः कन्या पार्वती त्रिषु पाण्डुनि ।
पीतेरुणे च राष्ट्रोऽस्त्री विषये स्यादुपद्रवे ॥ ६७८ ॥
मित्रं सुहृदि पुंस्यर्के मरू धन्वधराधरौ ।
अद्रयी द्रुमशैलार्काः करुः कारकशिल्पिनोः ॥ ६७९ ॥
गोत्रा भूर्गोसमूहश्च नाद्री क्लीबेभिधाकुले ।
तिलकालेष्वाद्भुतेषु चित्रं त्रिषु तु कर्बुरे ॥ ६८० ॥
सुमद्रौषधिभेदे स्त्री क्षेत्रं पत्नीशरीरयोः ।
गणितव्यवहारे च तीर्थे केदारयोग्ययोः ॥ ६८१ ॥
ज्येष्ठेमी मार्गवे शुक्रः क्लीबे रेतोक्षिरोगयोः ।
गुरुः सत्कारके पुंसि पित्रादौ सुरमन्त्रिणि ॥ ६८२ ॥
दुर्जरालघुनोः स्थूल आराध्ये च त्रिलिङ्गकः ।
त्रिषु क्षुद्रोल्पकृपणक्रूरगर्हेष्वपि स्त्रियाम् ॥ ६८३ ॥

व्यङ्गा नटी शीतहीना सरणा कण्टकारिका ।
वरो विवाहे देवादेः प्रार्थिते स्त्रीकृतो गवि ॥ ६८४ ॥
श्रेष्ठे विश्वौषधी स्त्री स्यान्मनागिष्टेऽप्ययं पुनः ।
क्लीबे च कुङ्कुमे पारी पात्रं पारा नदीभिदि ॥ ६८५ ॥
तीरात्तीरान्तरे क्लीबं समाप्तौ सर्वसंग्रहे ।
तन्त्रं प्रधाने सिद्धान्ते तन्तुवाने परिच्छदे ॥ ६८६ ॥
आयत्तहेत्वन्नाम्नोभयप्रियाशब्दसिद्धिषु ।
स्वमण्डलादिचिन्तायामौषधाद्युपस्करे ॥ ६८७ ॥
वीणादीनां गुणे नाड्यां तन्त्री स्यादात्मनः पृथक् ।
पुच्छश्च दूरभेद्यादिपूर्वान्या भेद्यधत्परा: ॥ ६८८ ॥
शारीनिले द्यूतभाण्डे त्रिषु वर्णे तु कर्बुरे ।
गर्तदूषणयोश्छिद्रं रन्ध्रं च विवरं तथा ॥ ६८९ ॥
मुक्ताशुद्धौ स्वरेष्वपि स्यात्तारः शुद्धमौक्तिके ।
देवीभनेत्रमध्ये स्त्री क्लीबे रूप्ये त्रिपूद्रटे ॥ ६९० ॥
अभ्युत्कर्षाम्बुवेगादयगतिभेदेषु संतती ।
भमस्कन्धे तु सैन्यस्य धारोत्कर्षौ गवि द्वयोः ॥ ६९१ ॥
दम्भराष्ट्रायुध -- चक्रं सेनारथाङ्गयोः ।
पुटभेदे चये शिल्पिभाण्डे चक्राह्वये पुमान् ॥ ६९२ ॥
परिच्छदाल्पमानेषु धने कर्णविभूषणे ।
तालाङ्गेऽप्यक्षरांशे स्त्री मात्रं कात्स्न्र्येऽवधारणे ॥ ६९३ ॥
यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु ।
शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ॥ ६९४ ॥
पुरोधिकमुपर्यर्थं भिक्षाभेदप्रधानयोः ।
गजाग्रजङ्घयोः शक्तौ गात्रमङ्गे कलेवरे ॥ ६९५ ॥
उग्रः शूद्रासुते क्षत्रादुत्कटे त्रिषु ना शिवे ।
दीक्षितस्याधिदैवे च व्याघ्री प्राण्योषधी द्वयोः ॥ ६९६ ॥
नागानां जननी कद्रूः कद्रुस्तु त्रिषु पिङ्गले ।
विपुले नकुलेऽग्नौ च बभ्रुः स्यात्पिङ्गले त्रिषु ॥ ६९७ ॥

नेत्रं पट्टे मन्थगुणे तरुमूले विलोचने ।
वस्तिनाड्यां चाथ पोत्रं मुखाग्रे हलकोलयोः ॥ ६९८ ॥
जरा रुग्भङ्गयोरस्त्री वप्रः प्राकाररोधसोः ।
केदारे सीसके स्वर्गे क्लीबे पितरि ना पुनः ॥ ६९९ ॥
स्नुह्योषध्यौ विद्युति च वयोऽस्त्री हीरके पवौ ।
सुधां रक्तालुणोरस्त्रं पुंसि केशे दरो भये ॥ ७०० ॥
गर्ते दरी गुहाल्पार्थे त्वव्ययं पर्वते धरः ।
धरा भूमावथ क्रूरो नृशंसे कठिने तथा ॥ ७०१ ॥
भयंकरे चाथ सत्त्वं यज्ञेऽरण्ये च साधने ।
सदादाने च दम्भे च धनाच्छादनयोरपि ॥ ७०२ ॥
धारार्तिकोणेष्वभिः स्त्री कारा बन्धे च तद्गृहे ।
राजयाम्नि पुमान्भागेऽथाङ्घ्रिः पादद्रुमूलयोः ॥ ७०३ ॥
करिणां बन्धनोर्व्यां स्त्री वारिस्तोये नपुंसकम् ।
सारं न्याय्ये वस्तुनि च पुमान्मज्ज्ञि स्थिरे बले ॥ ७०४ ॥
त्रिषूत्कृष्टे वस्तुनि तु दुर्वहेतिशयान्विते ।
औषधे द्विसहस्रे च पलानां भार इक्षुभित् ॥ ७०५ ॥
त्रिवर्के देशभेदश्च पुण्ड्रः पत्त्रं तु वाहने ।
पर्णे पक्षे चाथ धात्री स्तनदा क्ष्मामलक्यपि ॥ ७०६ ॥
योग्यभाजनयोः पात्रं नदीकूलद्वयान्तरे ।
सुगादौ नाट्यविषये शास्त्रं ग्रन्थनिदेशयोः ॥ ७०७ ॥
कृच्छ्रं दुःखं तपोभेदः शालमायुधलोहयोः ।
हस्तिभेदे वृषे भद्रो भद्रं शर्म सति त्रिषु ॥ ७०८ ॥
शाखायां स्त्री शारिरक्षे पक्षिपर्यागभेदयोः ।
पीलौ गिरियकक्रीडागुलके पर्वते गिरिः ॥ ७०९ ॥
ताम्रं शुल्बे त्रिषु गुणे तन्द्री निद्राप्रमीलयोः ।
व्यापृताकुलयोर्व्यग्रमत्रिषु भाण्डे हविर्धरः ॥ ७१० ॥
चक्राह्वभौ शीघ्रगे च त्रिषु क्लीबे त्वरं द्रुतौ ।
बलौ मेघोपले हस्तिहस्ते पाणौ करोंऽशुषु ॥ ७११ ॥

क्षारं रसविशेषे च पुंसि स्यात्काचभस्मनोः ।
ध्वान्तदैत्यारयो वृत्रा अभ्रमाकाशमेघयोः ॥ ७१२ ॥
स्त्रीभेदे कातरे भीरुः स्वदर्यूषाङ्गवययोः ।
क्षीरं दुग्धाम्बुनोश्चन्द्रं स्वर्णे कम्पिल्यके तु ना ॥ ७१३ ॥
कर्पूरेन्द्वोश्च कुटजे शक्रः स्यादासवे तथा ।
मर्त्ये नरो देवभेदे भरोतिशयभारयोः ॥ ७१४ ॥
घोरे घरस्त्रिषु घने भूरि स्वर्णे बही त्रिषु ।
मत्याने वर्तनोपाये यात्रा देवोत्सवेपि च ॥ ७१५ ॥
सालपर्ण्यां स्थिरा भूमौ दृढे स्यात्सौ न मेधवत् ।
खरस्तीक्ष्णे त्रिषु क्रूरे गर्दभे तु खरी द्वयोः ॥ ७१६ ॥
रक्षोभेदे पुमान्हारमुपायप्रतिहारयोः ।
इरा भूवाक्सुराम्राप्सराश्चाय पुरं पुरि ॥ ७१७ ॥
न ना देहे सर्वभद्रयागे क्लीवे गृहेपि च ।
धीरं स्यात्कुङ्कुमे सूरो गम्भीरसहयोस्त्रिषु ॥ ७१८ ॥
मारी भृङ्गामृतौ कामे मरणे मारणे पुमान् ।
चारी माण्डनचेष्टायां नृपतिप्रणिधौ पुमान् ॥ ७१९ ॥
संधानाच्छादने वस्त्रे शुभ्रौ दीप्तसितौ त्रिषु ।
संकरो मार्जनक्षिप्ते मेलने लोमजे त्रिष ॥ ७२० ॥
उद्धारः पाठशाकृतौ उद्भवे मार्गणे त्रिषु ।
इन्द्रद्रुर्देवदारुः स्याल्लकुचः कुटजार्जुनौ ॥ ७२१ ॥
मन्दारः सुरवृक्षे स्यात्पारिभद्रकरम्भयोः ।
मयूरस्तुत्थको दीप्योप्यपामार्गश्च बर्हिणः ॥ ७२२ ॥
कुक्कुरं ग्रन्थिपर्णे स्याद्द्वयोः शुन्यथ बर्बरः ।
अजगन्धा वर्द्धकद्रुः शाकभेदे तु बर्बरा ॥ ७२३ ॥
चिकुरः केशपाशे स्त्री भूलये चपले त्रिषु ।
पश्चाज्जङ्घा न नेमस्त्यावरा दक्षिणदिक्स्त्रियाम् ॥ ७२४ ॥
परान्यानन्तरोनाथ त्रिष्वेवमपरोप्यरौ ।
पश्चिमायामेव दिशि चतुरो वेगिदक्षयोः ॥ ७२५ ॥

किञ्जल्केऽस्त्री केसरो ना पुंनागे नागकेसरे ।
सटाबकुलयोर्नीचः पाण्डुरोगी च पामरः ॥ ७२६ ॥
सौवीरमञ्जनं कोल काञ्चिकं त्रिषु देशजे ।
जम्भीरः स्यात्तन्तशठे मरुवे हस्तिपिप्पली ॥ ७२७ ॥
अपामार्गोऽम्लिलवण वसिरो बदरी ढ्रुभित् ।
कर्पासी वल्कले क्लीबे कबरी केशपाशभित् ॥ ७२८ ॥
कडारस्त्रिषु कल्माप उद्धारः समहर्णयोः ।
भुक्तोच्छिष्टे परावर्त उत्क्षेपे चाय बर्करः ॥ ७२९ ॥
युवमेषे द्वयोः सोपहासे स्याद्वाच्यलिङ्गकः ।
युवराजे शिशौ स्कन्दे कुमारोऽश्वानुचारके ॥ ७३० ॥
द्वीपे कुमारो ना स्त्री तु कन्यकौषधिभेदयोः ।
मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु ॥ ७३१ ॥
सगराः स्युः क्रियाकारविपदाजिप्रतिश्रवाः ।
क्लीबे शमीफलेऽभहस्ताग्रे व्योम्नि पङ्कजे ॥ ७३२ ॥
वाद्यभाण्डमुखे नीरे तीर्थौषधिविशेषयोः ।
अक्षेः फले पुष्करं स्यादन्तरं त्वन्यभेदयोः ॥ ७३३ ॥
अवकाशावधौ मध्ये व्यवधानपिधानयोः ।
परिधानात्मरन्ध्रेषु स्यानावसरयोरपि ॥ ७३४ ॥
तादर्थ्यस्वकबाह्येषु मध्यगेप्यभिधेयवत् ।
अजिरं प्राङ्गणे काये रूपादिविषये तथा ॥ ७३५ ॥
सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका ।
वर्णसंकरजाता च संस्तरौ सस्तराध्वरौ ॥ ७३६ ॥
प्रकरः संहतौ पुष्पोपकारेयोत्तरा दिशि ।
मे पार्थवध्वां चोदीच्यानन्तरोर्ध्वेषु भेद्यवत् ॥ ७३७ ॥
भेदप्रधानयोश्चापि प्रतिवाक्ये नपुंसकम् ।
विराटतनये पुंसि द्वापरौ युगसंशयौ ॥ ७३८ ॥
स्याद्वाद्यभेदे सुषिरं गर्ते गर्तान्विते त्रिषु ।
नडे तु सुषिराभीरः शातवर्यभये त्रिषु ॥ ७३९ ॥

शिशिरोस्त्री ऋतौ शीते त्रिषु क्लीबे हिमे भवेत् ।
वंशाङ्कुरे करीरोस्त्री मदभेदे घटे च ना ॥ ७५० ॥
इक्षोर्विकारः सूक्ष्माश्मा रोगभेदश्च शर्करा ।
विष्टरः कुशमुष्टौ च पीठपादपयोरपि ॥ ७५१ ॥
गायत्री खदिरे मन्त्रे छन्दोभेदे त्रिलिङ्गकः ।
उदारो दातृमहतोर्दक्षिणोद्भटयोस्त्रिषु ॥ ७५२ ॥
शाक्वरोनडुहि छन्दोभेदे त्रिष्वथ रोगभित् ।
प्रदरः शरभङ्गौ च केदारः क्षेत्रतीर्थयोः ॥ ७५३ ॥
ओष्ठेधरोनूर्ध्वहीने त्रिषु दम्भे मृगेश्वरे ।
मायायां शम्बरः पुंसि जले क्लीबेथ मत्सरे ॥ ७५४ ॥
सृमरस्त्रिषु पुंस्येणे कलत्रं श्रोणिभार्ययोः ।
तमस्तमिस्रं सतमा रात्रिः स्त्री गजसज्जनम् ॥ ७५५ ॥
शृङ्गारो रसराजश्च नूपरोदमभुणि त्रिषु ।
अजातशृङ्गे गवे च सामुद्रं देहलक्षणे ॥ ७५६ ॥
लवणादौ समुद्रस्याथाकारादिचिह्निताकृती ।
मकारे मुखरागादावाह्वाने वर्णभिद्यपि ॥ ७५७ ॥
अम्बरे वसनाकाशौ सुगन्धिद्रव्यमाश्रयः ।
वाप्यालवाले चाधारो विस्तारो तरुविस्तृतौ ॥ ७५८ ॥
विटपेस्त्री भास्वरा स्यात्पाठा त्रिषु तु भासुरे ।
औशीरं चामरे दण्डे सहिते शयनासने ॥ ७५९ ॥
इन्द्रध्वजे विशीर्णे च सच्छिद्रे चापि जर्जरः ।
उर्वरा सर्वसस्याढ्या भूस्तथा भूमिमात्रकम् ॥ ७६० ॥
खपुरो लवकः पूगो विहारः सुगतालये ।
परिक्रमक्रीडनयोः संस्कारः शास्त्रजो गुणः ॥ ७६१ ॥
वासना प्रतियत्नश्चाथाकरो निकरे खनौ ।
आसारः स्यात्प्रसरणे वेगाद्वर्षे सुहृद्बले ॥ ७६२ ॥
निकारः परिभावे च धान्यस्योत्क्षेपणेपि च ।
प्रस्तरो मणिपाषाणशय्यास्त्रिषु मनोहरे ॥ ७६३ ॥

स्वादौ च मधुरो नीचपरयोरितरस्त्रिषु ।
व्यायामे प्रसरो वेगे प्रपञ्चे प्रणये तथा ॥ ७५४ ॥
गोपुरं द्वारि पूर्द्वारि तथा दाशपुरौषधौ ।
दुर्भिक्षादिकृते दुःखे कान्तारं दुर्गमे पथि ॥ ७५५ ॥
माणिक्यमुज्ज्वलं शृङ्गमूर्ध्वाग्रं शिखरत्रयम् ।
गुहादम्भनिकुञ्जेषु गह्वरं स्यात्तु चत्वरम् ॥ ७५६ ॥
चतुष्पथे प्राङ्गणे च नरेन्द्रौ नृपवैशिकौ ।
उदरे जठरं क्लीबे कठिने वाच्यलिङ्गकः ॥ ७५७ ॥
कन्दे राजकशेर्वाख्ये शुण्ठ्यामपि च नागरम् ।
पूर्भेदे वाच्यलिङ्गं स्यात्कुहरं गह्वरे बिले ॥ ७५८ ॥
शार्वरं त्वन्धतमसे घातुकेऽभ त्रिलिङ्गकः ।
वर्णे मोक्षे परब्रह्मण्यक्षरं त्रिषु चाक्षये ॥ ७५९ ॥
आन्डीरो बालके पुंसि सुवर्णे तु नपुंसकम् ।
मन्दिरं नगरे गेहे पिठिरं चरुपस्तयोः ॥ ७६० ॥
किंशारुः व्रीहिशूकेषु विकारी वैरवैकृते ।
ऋषौ मन्त्रे कुशे देवे पवित्रं पाविते त्रिषु ॥ ७६१ ॥
सुवर्णे कर्बुरं पापे कल्माषे तु त्रिलिङ्गकः ।
बन्धुरं संनते रम्ये खर्जूरं फलरूप्ययोः ॥ ७६२ ॥
ना द्रुमेनाकुले तु स्यादेकाग्रं तत्परे त्रिषु ।
आहारः स्वीकृतौ भुक्तौ छन्दःकाव्ययोस्तु शक्वरी ॥ ७६३ ॥
तुषारस्तु कणे क्लीबे तुहिने शीतले त्रिषु ।
कठोरः कठिनेपक्के संहारो नाशसंधयो. ॥ ७६४ ॥
प्रत्याहारे संग्रहे च तथा नारकभूभिदि ।
कर्पूरे पुंसि नासीरो भवेदग्रसरे त्रिषु ॥ ७६५ ॥
कालसूत्रं कृष्णसूत्रे तथा नारकभूभिदि ।
विद्याधरी देवभेदे द्वयोर्विद्यावति त्रिषु ॥ ७६६ ॥
विद्याधरः शक्तिधरः स्कन्दः शक्तिमति त्रिषु ।
तुण्डिकेरी तु कर्पासी बिम्बी च पितृकाननम् ॥ ७६७ ॥

करवीरः पुन्नभिन्नोपनिशा पृश्निपर्णिका ।
दन्ती दण्डधरो राजा यमो दण्डभृति त्रिषु ॥ ७६८ ॥
चतुरश्वधनुः शक्तिविषु वार्तोपयुक्तिवित् ।
द्यूतयुद्धादिविभ्रान्तौ माहाभिख्ये च यादसि ॥ ७६९ ॥
निमन्त्रणोपनेतव्येष्वहारोथ परिच्छदे ।
प्रगाढगात्रिकाबन्धे पर्यङ्कारम्भयोरपि ॥ ७७० ॥
समूहे स्यात्परिकरः स्यात्तु प्रतिसरोस्त्रियाम् ।
हस्तसूत्रे चमूपश्चाद्भागे यागादिके पुमान् ॥ ७७१ ॥
आरक्षे मण्डने च स्यान्नियोज्ये वाच्यलिङ्गकः ।
उपकारस्तूपकृतौ कुसुमस्रक्करेपि च ॥ ७७२ ॥
दुरोदरो द्यूतकरे पणे द्यूते नपुंसकम् ।
उदुम्बरो वृक्षभेदे देहल्यां चाप्यहस्करः ॥ ७७३ ॥
पणकृत्कुष्ठभेदश्च क्लीबे तु स्यात्सरोरुहे ।
शतपत्रं पुमान्दार्वाघाटे स्याच्च सागरे ॥ ७७४ ॥
अकूपारः कूबरे स्त्री भुवि विश्वंभरोच्युते ।
आडम्बरोस्त्री संरम्भे रवे च गजतूर्ययोः ॥ ७७५ ॥
अभिहारोभियोगे च चौर्ये संनहनेपि च ।
शिशुमारो जलोद्भूतजन्तौ तारागमाच्युते ॥ ७७६ ॥
परिवारः परिजने खड्गकोशेप्युपह्वरः ।
विविक्ते च समीपे च महामात्रो महर्द्धिके ॥ ७७७ ॥
हस्त्यारोहाधिपे चाभिसरः स्वबलसाध्वसे ।
युद्धे च व्यभिचारः स्याद्धिंसायामप्यसंभवे ॥ ७७८ ॥
संकरे व्यसने वृत्तान्तेपि व्यतिकरः कृतौ ।
तीर्थेवतारो देवादेरंशे स्यादवरोहणे ॥ ७७९ ॥
वर्धापके पूर्णपात्रं पात्रे पूर्णे जलादिना ।
प्रतीहारो द्वारि तत्स्थे द्वयोर्गुह्येप्यवस्करः ॥ ७८० ॥
वर्चस्के चापचारस्तु दुष्कृतभ्रंशयोरपि ।
आचारे परिचर्यायां प्राभृतारोपयोरपि ॥ ७८१ ॥

उपचारः सहचरी भार्यापत्न्योः परस्परम् ।
लताभेदे द्वयोर्मित्रे सार्धसचारिणि त्रिषु ॥ ७८२ ॥
अर्धचन्द्रा तु पालिन्दी गलहस्ते पुमान्शरे ।
नखक्षतविशेषे च त्रसभित्कौरवस्तथा ॥ ७८३ ॥
धार्तराष्ट्रः कृष्णचारः शवले त्रिषु ना मृगे ।
पारिभद्रः पारिजाते वदर्यां सुरदारुणि ॥ ७८४ ॥
ब्रह्मपुत्रो द्विजसुतो निषभिन्नारदादयः ।
सुकुमारस्त्रिषु मृदौ घृतभेदे नपुंसकम् ॥ ७८५ ॥
उपस्करो वेशचारो गृहमाण्डाद्ययाम्बुदे ।
पयोधरः स्तनेपि स्यादुपस्कारो गुणाहितौ ॥ ७८६ ॥
अध्याहारे वैकृते च दीर्घसूत्रश्चिरक्रियः ।
तन्तौ च विस्तृते क्लीबे दीर्घनिद्रा मृतिस्तथा ॥ ७८७ ॥
अतिस्वापरतिश्चाय काव्यमण्डलवेश्मभित् ।
निम्बश्च सर्वतोभद्रो व्यूहः कल्याणवांस्त्रिषु ॥ ७८८ ॥
चूडा किरीट केशाश्च संहता मौलयस्त्रयः ।
मातृभेदे क्षारकीटे काली दुर्गानवाम्दयोः ॥ ७८९ ॥
पालिन्दी पाटला कृष्णाजाजी कालापि नीलिनी ।
तिन्दुकेद्री यमे मृत्यौ समये नासिते त्रिषु ॥ ७९० ॥
मूलान्याद्यशिफाभान्ताः कलहेन्त्ययुगे कलिः ।
करोपहारदैत्येषु बलिर्ना गात्रजे स्त्रियाम् ॥ ७९१ ॥
स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः ।
दैत्यभेदे च बलिनि विश्वोपधिभिदि स्त्रियाम् ॥ ७९२ ॥
मेघालिङ्गः शठे व्यालो द्वयोः शार्दूलसर्पयोः ।
कुटीग्रामकयोः पल्लिः स्यल्ली शूलं रुगायुधम् ॥ ७९३ ॥
तच्छिखा वधकं काष्ठ शूला वाराङ्गनासिनी ।
ज्यानाशङ्कु द्वयोः कीलौ कूर्परः प्रतलं रते ॥ ७९४ ॥
कर्णाग्रो भाजने प्रान्ते पालिः स्त्र्यश्र्यङ्कपङ्क्तिषु ।
कलनाव्रातशल्येषु मृदौ मुत्थगस्य च ॥ ७९५ ॥

इन्द्रदोषे तालपुरी नियूहस्यादी छले कला ।
ध्वन्नावव्यक्तमधुरे ध्वाने त्रिषु मनोहरे ॥ ७९६ ॥
माल्यमर्थे सखीपङ्क्त्यो क्षेतो ना वृश्चिके फलम् ।
सस्यादौ फलके लाभ आयुधाग्रे कणेकृते ॥ ७९७ ॥
अम्ब्वम्बुविकृती वेला मर्यादा गिरिकालयो ।
कालो हलाग्रेऽग्रयोर्लोलश्चलसतृष्णयो ॥ ७९८ ॥
लीला विलासेऽनुकृतौ दल खण्डार्धयोऽपरे ।
सुगन्धपत्रोपादानेऽल्वो रन्ध्रगुहे बिलम् ॥ ७९९ ॥
नगौषधिभिदो रागद्रव्ये नीलयम झिल्लिका ।
नीला त्रिषु मणिगुणे कपिरत्नभिदोऽस्तु ना ॥ ८०० ॥
मलोक्ती पापविट्किट्टे कृपणे मलिने त्रिषु ।
भागधारावद्भुदो च कालिन्दि स्याद्भ्रसादिषु ॥ ८०१ ॥
गवाक्षे कोरके वृन्दे दम्भे मरस्यादिबन्धने ।
धूर्तकृत्ये च जाल स्याच्छील वृत्तस्वभावयो ॥ ८०२ ॥
तलं गोधास्वरूपाध पृष्ठेष्वस्त्री पुमान्द्रुमित् ।
चपेटे च वितस्तौ च व्यानस्खलितयोऽस्खलम् ॥ ८०३ ॥
चेलं वस्त्रे त्रिष्वधमे पलमुन्मानमांसयो ।
त्रिषु स्थूल जडे पीने हेलावज्ञाविलासयो ॥ ८०४ ॥
गीतकालक्रियामाने मध्याह्नुठमिते तरौ ।
ताल करतले चाम तुला सादृश्यमानयो ॥ ८०५ ॥
गृहाणां दारुबन्धार्थपीठिका सदृशं तथा ।
जलोद्भवनभाण्डे च राशिभेदे घटे द्वयो ॥ ८०६ ॥
जलं तोय त्रिषु जडे त्रिषु बालोर्भकाश्रयो ।
क्लीबे ह्रीवेरके नाम्रस्हे गोत्रे गृहे तया ॥ ८०७ ॥
कुलं सजातीयगणे संघे श्वासशरीरयो ।
किमासे त्रिषु सुसोरिण क्लीबे सुसी तु पाकम् ॥ ८०८ ॥
खल भूस्थानकर्णेषु क्रूरपामरयोस्त्रिषु ।
सैन्यस्य पश्चिमे भागे कूलमन्तिकतीरयो ॥॥ ८०९

शिला शराधरं दारु दृशाच करका तथा ।
प्राकारवृक्षयोः सालः सर्जे चाथ प्लवे किरे ॥ ८१० ॥
कोलः क्लीवे बदर्यां स्यात्कणा कोलाय भूरिला ।
वाकस्त्वःस्त्री गौर्द्रुशाखायां गेहे गेहैकदेशयोः ॥ ८११ ॥
शाला स्याद्दुरे भेलो मौरके वाच्यलिङ्गकः ।
तूलिश्चित्रोपकरणे शलाकातूलशय्ययोः ॥ ८१२ ॥
खेला क्रीडा विलासाख्ये त्रिषु दोला तु दोलिनी ।
प्रेङ्खा स्थाली पाकभाण्ड पाटलास्त्री तु भाजने ॥ ८१३ ॥
शिली गण्डूपदी भेका शिलोञ्छेषु शिलश्च ना ।
प्राण्यङ्गे तृणकाण्डे च ना नाली धमनी स्त्रियाम् ॥ ८१४ ॥
न ना नालाम्जादिकाण्डे त्रिषु स्याज्जलनिर्गमे ।
कमला श्रीर्मृगे पुंसि क्लीवे स्यात्पद्मतोययोः ॥ ८१५ ॥
सास्नायां नागभेदे चाप्यूर्णमयासत्सि कम्बलः ।
वातूलः पुंसि वात्यायां वाते वातासहे त्रिषु ॥ ८१६ ॥
वातलो वातुलश्चैवमाभीलं भीमकृच्छ्रयोः ।
बहुलाः कृत्तिका गाव एलाः पुंस्यग्निपक्षयोः ॥ ८१७ ॥
प्रभूते च प्रायिके च शितौ च स्यात्त्रिलिङ्गकः ।
उपलेक्षुविकारे स्याच्छर्करायां च नाश्मनि ॥ ८१८॥
रत्ने चाथामृते तोये कीलालं मन्दरक्तयोः ।
छर्दिर्नेत्ररुजोः क्लीवे समूहे पटलं न ना ॥ ८१९ ॥
पुष्पादिभाण्डे नाध्याये प्रियङ्गुर्महिला वधूः ।
पातालमौर्वाग्निरसातलयोः शङ्कुभिर्धिते ॥ ८२० ॥
श्वभ्रे कुकूलं पुंसि स्यात्तुषाग्नावथ केवलम् ।
*निर्णीते त्रिषु कृत्स्ने स्यादसहायेऽप शिक्षिते ॥ ८२१ ॥*
कुशलस्त्रिषु पर्याप्ते क्लीवे स्यात्क्षेमपुण्ययोः ।
वीणादण्डे प्रवालोऽस्त्री विद्रुमे नवपल्लवे ॥ ८२२ ॥
देवीभेदे करालोऽथे त्रिषु स्याद्दन्तुरभीमयोः ।
खण्डेखी शकृत बल्के रागभेदेऽप्यभिधपि ॥ ८२३ ॥

मृदौ स्निग्धे त्रिषु भवेत्क्ले चारौ च पेशलः ।
मण्डली स्यान्न ना सर्पे देशबिम्बे च मण्डलः ॥ ८२४ ॥
त्रिषु वृत्ते स्थानके तु परिधौ तु नपुंसकम् ।
कर्माङ्गेष्युपलेपादौ कुष्ठं नीलाम्बमुत्पलम् ॥ ८२५ ॥
ऊषणा पिप्पली ना तु तरुवत्काच्छिदाभिदोः ।
क्लीवे जले स्यात्कुद्दालः खनित्रे कोविदारके ॥ ८२६ ॥
संकुलं व्याकुले व्याप्तेविस्पष्टार्थवचस्यपि ।
यवाग्वां तरला रत्ने पुंसि दीप्ते चले त्रिषु ॥ ८२७ ॥
पललं तिलकल्के स्यान्मांसे च जगलस्त्रिषु ।
मेचके पिष्टमद्ये ना मेखला खड्गबन्धने ॥ ८२८ ॥
काञ्च्यद्रिदेशमौञ्जीषु कपालं कर्परे त्रिषु ।
उत्तमाङ्गास्थि मत्स्ये तु शष्कुली कर्णपुत्रिका ॥ ८२९ ॥
तुमुलं व्याकुले शब्दे त्रिषु स्यात्संकुले रणे ।
पाटला त्रिषु वर्णे स्याद्वीहौ ना कुसुमे न ना ॥ ८३० ॥
जाङ्गलो निर्जले देशे विशिते स्यान्नपुंसकम् ।
दुकूलं तनुवासः स्यात्क्षौमं च चपला तडित् ॥ ८३१ ॥
कुलटे स्यान्नयोर्ना तु पारते चञ्चले त्रिषु ।
तण्डुलो धान्यसारे स्याद्विडङ्गे कदली स्त्रियाम् ॥ ८३२ ॥
मृगभेदे ध्वजे रम्भास्तम्भे स्यादथ मञ्जुलः ।
मधुरे भेदलिङ्गो ना जलरङ्कुपतत्रिणि ॥ ८३३ ॥
काकोलो द्रोणकाके स्याद्विषे चाप्योषधौ स्त्रियाम् ।
धवलं सुन्दरे शुक्ले त्रिषु पुंसि गवि द्वयोः ॥ ८३४ ॥
अचलोऽद्रौ स्त्रियां भूमौ देहोन्मानौ तु बाहुली ।
कार्त्तिकः कोमला वृत्तिः स्निग्धे तुल्ये त्रिषु त्रिषु ॥ ८३५ ॥
शृङ्खला पुरुकटीकाञ्च्यां बन्धने चायसादिके ।
रसाला मधुरा भाषा भोज्यं ना त्विक्षुचूतयोः ॥ ८३६ ॥
निचुलो वेतसे चापादिकोशे ———गला ।
न पुमान्यन्त्रणायां च कपितागुरुशिंशपा ॥ ८३७ ॥

[ जीमूत ] मेघे । Me 4 । पर्वते । धन्यास्ते° Mh. 3, 254 ॥ [ उत्तप्त ] देवताडद्रुर्वृक्षविशेषः । शुष्कमांसे । उत्तप्ते कूमयो यथा । विताविते । उत्तप्तहाटकाचितानि तटानि मेरोः ॥ 326 ॥

[ प्रतति ] विस्तारे । वात्यासंवेगविष्वग्प्रततिवलयितस्फीतधूपाधिवासा c M. M. 102, 7 । वल्याम् । Śi 1, 5 ॥ [कलित] विदिते । अकलितदैवनियोगाः । आत्ते । शशिकलाकलितावतंसः c. Mh. 3, 247 ॥ 327 ॥

संख्याते । M M. 96, 1 । तुलिते । करकलितहराद्रे° Bā. I, 37; c Bā. I, 47 । क्षिप्ते । संग्रामे कलितोप्यमित्रनिवहस्तुटावकीर्ति तत्र । शब्दिते । कलितकीर्तिषु शत्रुमुखेषु ते ॥ 328 ॥

[ गर्जित ] मत्तकुञ्जरे भारतादौ प्रसिद्धः ॥ [ प्रार्थित ] अभियुक्ते आक्षिप्ते । Ra. 9, 56 । सान्त्विते । प्रार्थितापि न विमुञ्चति मानम् ॥ 329 ॥

[वितत ] प्रसृते । Ku. 2, 46 । व्याप्ते । विततमतिसिताभिर्व्योम सोमप्रभाभिः । विस्तृते व्याप्ते । भ्रमविततमुखभ्रंशिभिः कीर्णवर्त्मा c. Śā. 7 ॥ [ संतति ] परंपरायाम् । अभूमिर्मादृशाद्दृशामियमाश्चर्यसंततिः । संतत्यर्थं दारा व्याधिप्रशमाय चेति श्लेष इत्यादौ पुत्रे । विस्तारे । पश्यैतां मरुसंततिं कुसुमितां संतोषतान्तिच्छिदम् c. Mh. 3, 301 ॥ 330 ॥

[ संमति ] इच्छायामपि । संमतिर्न विमतिर्नियोगिनः ॥ [ रजत ] रूप्ये । M. 3, 202 । हारेऽप्येष्यम् । शुक्ले । रजतमराजत वसनम् ॥ 331 ॥

[ कपोत ] पारावते पक्षिभेदे । Śi. 3, 51 । विहगान्तरे एतन्नाम्नैव प्रसिद्धे । Ku. 4, 27 । वर्णे । कपोतपोतकपोताः ॥ [ संवित्ति ] प्रतिपत्तौ । Bh. Ś. 53 । संवित्तिः कान्तायुगेत्यादावविवादितायां व्यवस्थायाम् ॥ 332 ॥

[ पक्षति ] इच्छायामपि । गगन० Mh. 3, 268 ॥ [ द्वीपवत् ] नदे अब्धौ च । द्वीपवत्सु विचरन्ति कीर्तयः ॥ 333 ॥

नद्यां प्रसिद्धः । यथा द्वीपवती ॥ [ दृष्टान्त ] उदाहरणे । Śi. 2, 31 । शास्त्रे । अभ्यस्तदृष्टान्तशतस्य तस्य ॥ [आयति ] सर्वत्र । कुचद्वंद्वेन तन्वङ्ग्या राजता प्रकटायतिः ॥ 334 ॥

[ विधूत ] कम्पिते । एते विधूततरलायतपक्ष्मयामाः । त्यक्ते । विधूतकल्पमाजालगम्भीरोदारमूर्तये ॥ [ नियति ] दैवे । नियतिः केन विलङ्घ्यते सखि । संयमे ! नियतिं विधाय चित्ते ॥ [ विकृत ] द्वेषेपि । विकृततरमिदं निगृह्य चित्तम् ॥ [ आप्लुत ] स्नातमात्रके । Ku. 6, 5 ॥ 335 ॥

गुरुकुलान्निवृत्तः स्नातक उच्यते ॥ [ उद्घात ] आरम्भे । Ra. 4, 20 । स्खलिते । Ra. 2, 72 ॥ [प्रसृत] निकुञ्जपाणौ । एतां॰ Mb. 3, 267 । उदाम॰ H. Ch. 13, 8 इत्यादौ जङ्घायां स्त्रीलिङ्गः । विस्तृते च त्रिलिङ्गः ॥ 336 ॥

[ ककुद्मत् ] दान्ते । Ku. 1, 56 । ककुद्मती तीव्रनखक्षताङ्किता इत्यादौ कट्यां स्त्रीलिङ्गः ॥ [ परेत ] दूरगेष्वप्यः । मृते । परेतभवने तदा चरणमाशु चक्रे जनः ॥ [ दैवत ] दैवतशब्दो देवतायामधिष्ठाने देवेषु च जातिविशेषे वर्तते ॥ [ सरस्वत् ] नदे अर्णवे वा । सर स्वतिप्रसादं मे कुरु चित्तसरस्वति D. Ś. 50, K. Pr. 235, 1 ॥ 337 ॥

[ मारजित् ] बुद्धेपि । मारजिज्जयति जाह्नवीजले लोलवीचिवलये समादधत् ॥ [ भगवत् ] जिने । अथ खलु भगवान्स लोकधातौ । पूज्ये । K. K. S. 2, 4 ॥ [ उन्मत्त ] धत्तूरे । उन्मत्तकरसास्वादात् । मादिनि । Su. 2544 ॥ 338 ॥

[ निर्ऋति ] सर्वत्र । यः पुण्य॰ Mh. 3, 263 ॥ [ आवर्त ] रोमभेदे अम्भोभ्रमे च । Śi. 5, 4 । पठने आवर्तो मुखस्थितिर्मन्यस्य । रूपे गणनायाम् । देवा अयुग्मावर्ताः ॥ 339 ॥

[ पुष्पवत् ] दिवाकरनिशाकरयोरपि । Śr. Ch. 25, 132 । स्पृशति तिलकहेतोः शोणितं पुष्पवत्या इत्यादौ रजस्वलायाम् माल्यधारिणि पुष्पयुक्ते ॥ 340 ॥

[ विवृत ] कोशनिष्कृष्टे । Ra. 12, 40 । व्याकृते व्याख्याते । विवृतोऽभिनवो मया । प्रकाशिते । विवृतेव रहस्ये । विकासिते । Ku. 4, 26 । वर्णधर्मे । स्पृष्टत्वमीषत्स्पृष्टत्वं विवृतत्वं तथैव च । पाठधर्मे । अभ्यासं विवृतं पठेत् । सुशिरे । M. M. 160, 1 ॥ 341 ॥

[ विवृति ] एषामेवार्थानां भावे धात्वर्थरूपतायां विवृतिशब्दः ॥ [ संवृत ] स्थगिते असंपुष्टिते । अयं पटः संवृत एव शोभते Mṛichchh. 33, 17 । असत्यभूते । असंवृतमिदं वाक्यम् । वर्णगुणे । संवृतत्वं च वर्णानामन्तःकरणमि-

ष्यते । पाठगुणे । संवृते संवृते कुर्वन् । गुप्ते । Ra. 1, 20 । वर्णपाठगुण इत्यस्य विशेषणं विवृततर इति ॥ 342 ॥

[संवृति] कठिनहृदये संवृतिरियम् Sp. 1876 इत्यादि पूर्ववत् ॥ [एकान्त] निश्चये । शत्रुः शत्रुर्मित्र मित्रं भवतीति नायमेकान्तः । रहसि । कान्ते कान्तजनान्तिकं तरसि चेदेकान्तमेकान्ततः । गुणे । तस्य त्वेतदेकान्तमेकान्तग्रहणम् । एकदेशे । एकान्तोन्नमितभ्रु विभ्रमभरभ्राम्यद्विलासायुधम् । अव्यभिचारिणि । Ku. 1, 36 ॥ 343 ॥

[ प्रत्यन्त ] द्वयेपि । प्रत्यन्तेष्वविमूढतामुपगतास्तिष्ठन्ति शिष्टाः कथम् ॥ [जयन्ती] देवी वामस्रोतःप्रसिद्धा ॥ [जयन्त] इन्द्रात्मजे । Ra 3, 23 ॥ 344 ॥

[ भावित ] साक्षात्कृते । Ra 1, 74 । अन्यत्रान्वेष्यम् [ c Mh. 3, 275 ] ॥ 345 ॥

[ आहृत ] आनीते । आहृतैर्गुह्यकव्रातैः । भुक्ते । आहृतानि सुरभीणि फलानि ॥ [ लुठित ] लुठितोत्थितकेशज इत्यादौ परावृत्ते । लुठितश्वेतयते जनोधम इत्यादौ भ्रष्टे पदाच्युते च ॥ 346 ॥

[ गलित ] गलितस्य स नेत्रगोचरादित्यादौ तिरोहिते । — — — — त्यादौ स्रुते । गल अदन इत्यस्य धातोः प्रयोगे भुक्ते । पतिते । Me. 44 ॥ [ गलिता ] छन्दोविशेषे द्विपदीभेदे ॥ 347 ॥

[ निर्मुक्त ] त्यक्ते । निर्मुक्तसर्वभावस्य । निर्ग्रन्थिके । निर्मुक्तकवरीभारव्याप्तवक्षःस्थलाय सा ॥ [ वसुमत् ] स्फीते । वसुमानम्रमङ्गिरर्च्यते ॥ [ चित्रकृत् ] वञ्जुलो वेतसः ॥ 348 ॥

[ पर्याप्ति ] पूर्णतायाम् । पर्याप्तिर्बहुमानस्य । शक्तौ । पर्याप्तिः कस्य तावती ॥ [ विनीत ] शिक्षिते हये । वनायुजैर्विनीतैस्तैः ॥ 349 ॥

सप्रश्रये । निन्ये विनीतैरवरोधरक्षैः । निरस्तेऽन्वेष्यम् ॥ [ निवीत ] कण्ठालम्बे यज्ञसूत्रके । वैदयस्य तु निवीतं स्यात् । प्रावृते । निवीतचीनांशुकशुभ्रकान्तिभिः ॥ 350 ॥

[ पतित ] स्पष्टम् ॥ [ अक्षत ] यवे । Ra. 2, 21' ॥ 351 ॥

[ कलधौत ] रूप्यहेम्नोः । कल° Mh 4, 106 ॥ [ पुरस्कृत ] अग्रेकृते । Ra. 2, 20 । अभ्यर्चिते । हरिर्मरुद्भिः स पुरस्कृतः ॥ 352 ॥

[ अनर्गल ] दुष्टे । Ki. 2, 7 । गर्हितो निर्मदः । निन्दितो लोकापवादः ॥ [ अभिनीत ] संस्कृते भागादिनाभिनयविषयतां नीते । अभि° Mb. 4, 95 । भाविते । Ra. 18, 39 v. l. । अमर्षवत्यन्वेष्यः ॥ 353 ॥

[ प्रतिहत ] प्रतिस्खलिते । Ku. 2, 48 । विद्विष्टे बाधिते । धिग्धिक्दृष्टान्तं प्रतिहतमिदं तीव्रमत्याहितं नः c. 356 ॥ [ अभिजात ] सुकुमारे । अभिजातां नवमालिकामिव । कुलीने बुधे वा । अभिजाततमेन तेन सा यदि युज्येत हि दैवयोगतः ॥ 354 ॥

[ अपचिति ] हानौ निष्कृतौ वा । Si. 16, 9 । अर्चने । केचिदपचितिभाञ्जि म-- प्यमपठन् c. H. Ch. 8, 5 । व्यये । गुरु° Mb. 4, 93 ॥ 355 ॥

[ अत्याहित ] महाभीतौ जीवनिरपेक्षतायां वा । धिग्धिक्दृष्टान्तं प्रतिहतमिद दुष्टम° c 354 ॥ [ समाहित ] समाधिस्थे । यश्च चञ्चलगर्तान्समीरणान् संनियम्य हृदये समाहितः । दत्तोत्तरे । समाहितो° Mb. 4, 129 ॥ 356 ॥

[ उपाहित ] अनलोत्पाते । उपाहितोऽङ्गमभियोतिविह्वलाः । आरोपिते । उष्ट्रो° Mh 4, 100 ॥ [ उपस्थित ] समाश्रिते । Ra. 2, 39 । अन्यत्रान्वेष्यम् ॥ 357 ॥

[ अवध्वस्त ] स्पष्टम् ॥ [ अवसित ] अवसानं गते । अवसितमन्त्रसाधन° M M. 160, 5 । ज्ञाते । अवसितमन्त्रो राजा । निश्चिते । M. M. 191, 2 ॥ 358 ॥

[ विजृम्भित ] विकसिते । पुष्पेषु संततिविजृम्भितपल्लवेषु । चेष्टायाम् । तत्कस्यापि विजृम्भितं भगवतः सन्मन्त्रलीलाजुषः c. Bh. Ś 96, Su. 1019 । प्रसृते । अत्रान्तरे तत्र विजृम्भितेषु तूर्येषु ॥ [ परिगत ] विज्ञाते । इति परिगतमेतत्स्यानमासाद्य सद्य. । वेष्टिते । कुसुमपरिगतोसौ केशपाशो भवत्याः । प्राप्ते । परिगत° Mb. 4, 119 ॥ 359 ॥

[ अन्तर्गत ] ह्येपि । हृदयान्तर्गतैः मन्युर्नोदग्ध्वा विनिवर्तते ॥ [ अवदात ] सिते । कुन्दावदातं यशः । पीते । हरिद्रद्रवनावदातम् । विशुद्धे । सत्यावदाते वचसि त्वदीये ॥ 360 ॥

[ प्रतिक्षिप्त ] निराकृते । प्रतिक्षिप्तो° Mb 4, 115 । प्रेषिते । पर° Mb. 4, 115 ॥ [ अधिक्षिप्त ] ऊर्ध्वाहिते । अधि° Mb. 4, 98 । भर्त्सिते निन्दिते च । अधिक्षिप्तोऽपि विकृतिं न याति क्वापि सज्जनः ॥ 361 ॥

[ भोगवती ] द्वयेपि । भोगवत्यपि वसुधरां भिता ॥ [ ऐरावत ] कञ्चा-यते शतक्रतुचापे । Ra. 1, 36 । गजे । ऐरावते° Su. 2493 ॥ 362 ॥

[ निराकृति ] अस्वाध्याये । ब्रह्मबन्धो मुनिखेटे निराकृति· [ sic ] c. H. Ch 12, 1 । प्रत्यादेशे । पतन्माननिराकृतौ कुलिशतां यातं विभोर्मण्डलम् ॥ [ प्रतिकृति ] प्रतिमायां प्रतिबिम्बे । रम्यां रघुप्रतिकृति· स° c. Ra. 5, 63 । प्रतीकारे । वैरप्रतिकृतौ दक्ष ॥ 363 ॥

[ अभिशस्ति ] द्वयेपि । Mh 4, 99 ॥ [ दिवाकीर्ति ] द्वयेपि । Mh. 4, 110 ॥ 364 ॥

[ प्रतिपत्ति ] प्रागल्भ्ये । Ra. 1, 1 । गौरवे । Ra. 8, 64 । आरम्भे प्राप्तौ बोधे वा । अर्थानर्थौ विचिन्त्याः स्युः कार्याणां प्रतिपत्तय· ॥ [ धूमकेतु । उत्पाते । Ku. 2, 32 ॥ [ हैमवती ] वचाकाञ्चनीहरीतक्य ओषधिभेदाः । गङ्गागौर्यो· । चुकोप° Mh 4, 132 ॥ 365 ॥

दक्ष जातादिषु त्रितिङ्गयाम् । Ku. 3, 23 ॥ [ वैजयन्ती ] पताकायाम् । Śi. 6, 69 ॥ [ रविसुत ] यमे । रविसुतभयं न पश्यति । मनौ । रविसुतग-स्तेन निश्चय. स्यात् ॥ 366 ॥

सौरे । उच्चै· स्थितो रविसुतो विदधाति सर्वम् । कर्णे । तीक्ष्णाः शरा रवि-सुतस्य निपेतुरुग्राः । सुग्रीवे । Ra. 12, 104 ॥ [ निपातित ] द्वयेपि । निपा-तितपितृभ्रातृमातामहपितामहम् ॥ [ देवखात ] ह्रदे । M 4, 203 । गुहायां प्रसिद्धम् ॥ 367 ॥

[ प्रजावती ] भ्रातृजायायाम् । Ra 14, 45 ॥ [ समुद्रान्ता ] भूमौ । समुद्रान्ता स्थिरां शुद्धाम् । कार्पासी तूलम् ॥ 368 ॥

[ उपरक्त ] राहुग्रस्तेऽर्के । उपरक्तोपि विवस्वान्न जातु कान्तिं निजां त्यजति । व्यसनार्ते । नैवोपरक्तहृदयस्य हिताहिते स्तः । भास्वरागे । एतन्मे नितरां दुनोति हृदयं कोपोपरक्तं मुखम् ॥ [ प्रबोधित ] अवगमिते । उपदेशवचः प्रबो-धितस्तव संयाति विहाय संसृतिम् । अपास्तनिद्रे । प्रबोधितो य स्तुतिगीतमङ्गलै· c. Ki. 1, 38 ॥ 369 ॥

[ समाधात ] एषां यस्मो भेदः ॥ [ विपातिपत् ] इयेपि । विपतितवतां किमसाध्यं इयभेपि स्वं परिक्षिपताम् ॥ [ प्रणिहित ] न्यस्ते । मन्दं° Mh 4, 115 । समाहिते । माध्यं त्वया प्रणिहितचेतसा ॥ 370 ॥

न्यासे समाधौ च प्रणिहितं भाश्रमात्रम् ॥ [ अभियुक्त ] सक्ते। युक्तोभियुक्तो जनः । आक्षिप्ते । अभियुक्त इमान्महीभुजः c. Ki. 2, 46 ॥ [ मूर्धाभिषिक्त ] इयेपि । Mh. 5, 20 ॥ 371 ॥

[ यादसांपति ] इयेपि । Mb 5, 21 ॥ [ परिभावित ] समन्तादुच्यमाने । परिभावितभाष्यशिष्यवर्गं गुरुगेहम् । नियमे । षट्कर्मानुष्टानं द्विजाना परिभावितम् ॥ 372 ॥

[ पृथु ] आदिराजे दीर्घे च । Su. 2502 ॥ [ पृथ्वी ] धरण्याम् । Bu. I, 48 ॥ 373 ॥

[ ग्रन्थि ] पर्वणि यन्त्रणायां च । Śu. 1002 c Bh. Ś. 82 । संधाने । मृगत्वचं ग्रन्थिमतीं वसानम् c Ku 3, 46 । पिटके । ग्रन्थे मा गुरुर्गनेसुदन सते ग्रैवेयकोस्मीति भोः ॥ [ अर्थ ] अभिधेये । Ra. 1, 1 । विषये । इन्द्रियाणीन्द्रियार्थेषु । रायि धने । Sp 606 । प्रयोजने । Su. 1472 । वस्तुनि । सर्वमि° Mh. 2, 209 ॥ 374 ॥

[ तीर्थ ] सोपाने । Ra 16, 33 । अत्र हि सोपानेन तरणमार्गो लक्ष्यते । पात्रे । Ra. 5, 15 । अर्हत्सेविते । नृणां पापकृतां तीर्थे पापस्य शमनं भवेत् ॥ दक्षस्तीर्थंस्तशास्त्रार्थो दृष्टकर्मा शुचिर्भिषगित्यादावागमे । गुरूपचारात् ॥ स्त्र्यृतौ । कामं तीर्थे स्त्रियं यायाद् ब्रह्मचार्य यथा भवेत् । सच्चिणि यज्ञप्रवृत्ते । फल° Mb. 2, 213 । उपाये । अनेन तीर्थेन हि किं न साध्यते ॥ [ प्रस्थ ] सानौ । Ku 1, 54 । सर्वारम्भास्तण्डुलप्रस्थमूला इत्यादौ माने । पलानां विंशतिः शतं च प्रस्थः ॥ 375 ॥

[ गाथा ] या संस्कृते आर्या सा प्राकृते गाथा । वाग्भेदे सा गीतपदपाठे । यथा । गाथाः पठेथ मधुर मदनापदूतीरित्यादौ ॥ [ ग्रन्थ ] निर्ग्रन्था आर्हता निर्धना इत्यर्थः ॥ [ आस्था ] आस्थीयतेस्यामित्यास्था आस्थानी । आशायाम् । आस्थापरास्था सदृशी तवैषम् । आदरे । Ku. 6, 63 । यत्ने । आस्थपरेणैव

जनेन लभ्या पदद्वयी ते यदपि त्रिनेत्र ॥ [ संस्थ ] स्पशे चरे पुंसि । संस्थैः समीक्ष्य परकृत्यमनन्यकार्यः ॥ 376 ॥

[ संस्था ] व्यवस्थायाम् । संस्थामनालोच्य निकारमेति । मरणे । संस्थां गतो विकारः । यागोपकरणे [sic] । दैवं संस्थां कृत्वा धर्मं सौत्ये प्रयुञ्जीत ॥ [ वीथी] वेश्माद्यन्वेष्यम् । वर्त्मनि । विहारवीथीव मनोभवस्य ॥ 377 ॥

[ सिक्थ ] पुलाक ओदननिष्पत्तिपरीक्षा । अन्तर्निविष्टसिक्थसितौष्ठिककखुरिशकादिचरणत्रः c. Kutt. 64 इत्यादौ मदने नपुंसकम् । एतत्तु मदनमिति वैद्याः । मद्य मुचि कल्क इति धात्वर्थानुगुण्यमस्मिन्नेव पक्षे दृश्यते ॥ [ कुथ] दर्भेषु । कुथपवित्रकपूतकरो द्विजः ॥ 378 ॥

[ मन्थ ] मन्थाने । Su. 35 ॥ [ सिद्धार्थ ] द्वयेपि । सिद्धार्थता स्फुरति यावदियं स्फुटैव सद्वृत्तता स्फुरति सर्षप तावदेव ॥ [ समर्थ ] शक्तिस्थे । समर्थो धर्ममाचरेत् । संबद्धार्थे हिते वा । तया समर्थां गिरमूचिवांसम् ॥ 379॥

[ क्षवथु ] द्वये । सुतीक्ष्णक्षवथुद्गारसंतापाचान्तविग्रहः ॥ [ उपस्थ ] अङ्के उत्सङ्गे गुह्ये च । उपस्थसंस्थापरिचुम्बनोन्मुखी ॥ [ निर्ग्रन्थ ] निष्परीवारः परिवारकरहितः क्षपण आर्हतः ॥ 380 ॥

[ उन्माथ ] पाशयन्त्रके । उन्माथबद्धमार्गस्य गजस्येव विचेष्टितम् । वधो मारणम् । घातस्ताडनं च ॥ [वयःस्थ] यूनि । एते वयःस्थाः स्थपुटेपि मार्गे ॥ 381॥

[ मन्मथ ] कपित्थः फलविशेषः । कामे । Ku. 3, 21 ॥ 382 ॥

[दशमीस्थ] क्षीणरागः शान्तचित्तः । वयोतिगो वृद्धः । यथा । M. 2, 138॥ [ अनीकस्थ ] द्वयेपि । अनीकस्थैः स्वस्थैः स्थितिरिह कथं शत्रुनिधने ॥ 383 ॥

[ हृद् ] मनसि । इत्युन्मादकराः शशाङ्करुचयश्चेतोहरः पञ्चमः । वक्षसि । Ku. 3, 50 ॥ [ भिद् ] दारणं मारणादि भेदो विशेषः ॥ [ वन्दी ] मर्यादापालनधनादिनिर्ग्राहणार्थं स्वकपुत्रादिनिवेशनं पणबन्धः । हठहृतायाम् । मोक्ष्यध्वे स्वर्गवन्दीनां वेणीबन्धैर्विभूतिभिः c. Ra. 10, 47 ॥ 384

[ पद ] व्यवसाये निश्चये । चित्ते विचाररचिते च पदं न किंचित्सम्यक्स्फुरत्यहह कोपि विधेः प्रमादः । परमं पदमार्तचेतसामभविष्यं यदनङ्ककर्मीश्वर इत्यादौ परित्राणे [ ?c. Mh. 2, 226] । स्थाने । Ki. 2, 30 । वस्तुनि न्यासे चरणक्रमे

च । पदे पदे स स्खलितानि रक्षन् । अपदेशे व्याजे । अनुपदेन विगलितस्वच्छो मानस्तया चाचीत्यादौ । पादे । Ku 5, 85 । तन्मुद्रायाम् । Ku. 1, 6 । चिह्ने । Ku. 2, 64 । अक्षे अक्षांशे । पदमपि वेलापतितं वहति विभवः प्रवासन्ति । शब्दे । यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम् ॥ 385 ॥

[ पाद ] रश्म्यङ्घ्र्योः । Su. 547 । तुर्यांशो दीनारादीनाम् । द्विपादा ऋगित्यादौ ऋगंशे । प्रत्यन्तपर्वते । Me. 19 । वृक्षमूले । पादपानेन पादपाः ॥ [ संविद् ] संकेते । Ra. 7, 28 । ज्ञाने । नष्टाविव दृष्टेषु संवित्सामर्थ्यभाविनः । कालेन्वेष्यम् ॥ 386 ॥

संभाषणे । तदा° Mh. 2, 232 । क्रियाकारे प्रतिज्ञायां मा । संविदि स्मरणीयं मदन्यथा हीयते ततः । आचारे । कर्त° Mh. 2, 233 । नाम्न्यप्यन्वेष्यम् ॥ [ दृषद् ] निष्पेषणशिलायाम् । संपिष्यतां दृषदि संप्रति चन्द्रमूर्तिः । शिलामात्रे । Me. 55 ॥ [ भेद ] विदारणे । Ku. 8, 86 ॥ 387 ॥

उपजापे । आकोपितान् भेदसहान्करोति सः । विशेषे । शब्दभेदे स्मृतिः कथम् ॥ [ गद ] हरेर्भ्रातरि आयुधे च । सगदः सह सारणेन तम् c. Śi. 16, 13 ॥ [ संपद् ] श्रियाम् । संपदि दानं दीनजने विपदि न धैर्यं यस्य । उत्कर्षे आधिक्ये । Ki 1, 17 ॥ 388 ॥

[ कन्द ] — — — — इत्यादौ मूले । किं° Sp. 1725 इत्यादौ सूरणाख्ये शाकभेदे । सूरणशब्देन च समस्तशाकोपलक्षणम् ॥ [ छद ] ओष्ठे । दन्तच्छदे बिन्दुपवित्रितोदरे । गरुत्सु पक्षेषु । सितच्छदैर्मण्डलितोरुपुच्छैः ॥ [ ह्रद ] तोयाशये । Ra. 7, 27 । स्रोतसि । प्रवृत्तघोरा रुधिरह्रदाकुलाः ॥ [ बिन्दु ] नयेयं मैन्दवी कलेत्यादौ बवयोरेकत्वस्मरणाद्वेदितरि बिन्दुः । विप्रुषि । Ku. 5, 24 ॥ 389 ॥

दन्तक्षते शून्ये च । एतद्विधं त्वदधरदलं बिन्दुनैकेन युक्तं धत्ते शोभां तव वदने यत्पराशीतिरिक्ताम् [ sic ] । अर्थप्रकृतौ । बीजं बिन्दुः पताका च c. Daś. I, 17 । भ्रूमध्यतेजसि । S. P. 25 ॥ [ स्वादु ] इष्टे । Śi. 10, 3 ॥ [ मृदु ] अतीक्ष्णे । मृदु धनुर्वहता किल कौसुमं किमिव कृत्यमनेन तपस्विना । कोमले । मृदुभाषिणि ते मुखेन्दुना ॥ 390 ॥

[ छन्द ] अभिप्राये । छन्दानुवर्ती जितरं न याति । वशे । Sɪ. 1472 ॥ [अब्द] जीमूते । शारदाम्बदशाइरं यशस्तव । वत्सरे । लौकिकाब्दान्विनिक्षिपेत् ॥ [ स्वेद ] घर्मे । स्वेदो नवः किं° c. Ku 3, 33 । स्वेदने । स्वेदोदयो नवज्वरे । स्तम्भः स्वेदोथ रोमाञ्च इत्यादौ कामहेतुके घर्म एव सात्त्विको भावः ॥ 391 ॥

[ छेद ] विरामे । Ku 2, 41 । खण्डे । Me 11 ॥ [ शाद ] जम्बाले । क्लास्थान° Mh 2, 232 । शष्पे । Ra 2, 17 ॥ [ क्षोद ] विमर्दे । क्षोदक्षममभुग्नं° c R. K. II, 8 । चूर्णे । कर्पूरक्षोदधूसरम् ॥ [ नाद ] शब्दे । बिन्दुनादगमनागमनाभ्याम् । शब्दे । M. M 178, 2 ॥ 392 ॥

[ शरद् ] वत्सरे । M. Ch. I, 42 । ऋतौ । Su. 965 ॥ [ क्रव्याद् ] रक्षसि । Ra. 15, 16 ॥ [ सूद ] सूपे । सूदखादनविशुचिकाचित. । ऊषरभूमिके देशे । सूदे दामोदरीये इ विपशापालसमर्पिताम् c. Râj. I, 157, 167 ॥ 393 ॥

[ कुन्द ] भ्रमे वल्लखयन्त्रे । An. II, 80; c. Nai. 19, 54 । पुष्पभेदे शैशिरे । कुन्दे नन्दति कैरवे विहरति पङ्केरुहे रोहति ॥ [ मन्द ] अपटौ हम-जातौ च । Śɪ. 5, 49 । शनैश्चरे । Me. 9 । मूढे । Ra. 1, 3 ॥ 394 ॥

[ मद ] क्षैब्ये । दृष्ट्वा ततश्च तरुणेन मदेन लब्धाम् । गर्वहर्षयोः । Ra. 4, 22 । श्मशाने । R. K. 1, 1 । मद्ये । Ku. 8, 76 v. l. ॥ [ ककुद ] राजलिङ्गे । उच्छ्रितककुदि महाबलचतुरङ्गबलान्विते नृपतौ । वृषाङ्गे । आवर्तोन्नतस्यशुभान-मितकाये ककुद्मन्तं मुक्त्वा [c. Pa. 1662] । समुल्लिखन्° Ku. 1, 56 इत्यादौ ध्वतिशायिते वृषाङ्गे रूढः । भेदे प्रसिद्धः ॥ 395 ॥

[ निषाद ] लुब्धके । Ra. 13, 59 । संकरजन्मनि । M. 10, 8 ॥ 396 ॥

[ ककुद ] प्रधाने । अस्य राजककुदस्य क्वापि सा कीर्तिरुल्लसति लोकपावनी । राजलिङ्गे । Ra. 3, 70 । वृषाङ्गे । ककुद° Mh. 2, 220 ॥ [ मर्यादा ] धारणायां स्थितौ । Bh. Ś 92 । सीमनि । मर्यादां सागरस्त्यजेत् ॥ [ विशद ] व्यक्ते । Ku. 3, 33 । विशदचन्द्रिकया व्यक्तमासिततिमिरयादौ विशदे पिच्छिलगुणविपरीते शुक्लस्योपचारात् ॥ 397 ॥

[ गोविन्द ] द्वयेपि । गोविन्दता च विहिता भवता यथार्था ॥ [ कुमुद ] कपिजलजयोः । H. Ch. 5, 5 । नागो दिग्गजः । भुजगविशेषश्च ॥ [ कुमूद ] वृद्धिजीवने । कुसृदकृषिवाणिज्यैर्वैश्यवृत्तिरुदाहृता ॥ 398 ॥

कुसेयके आलस्योपहते । प्रज्ञा करोति किं तस्य यः कुसूदेन वर्तते ॥ [ प्रतिपद् ] ज्ञाने । भावैर्निरयानुबद्धा प्रतिपदियमहो दीर्घदीर्घा स्थिता ते । तिथौ । Ra. 8, 64 ॥ [ प्रसाद ] अनुग्रहे । Ku. 3, 10 । नैर्मल्ये । प्रसादमादर्श इवान्तरात्मनि । प्रीतिदाने । राज्ञा प्रसादीकृतमेतदत्र ॥ 399 ॥

[ आक्रन्द] सारावे रुदिते । आक्रन्दस्तनिते° Dhv. 92, 11 ; Su. 1776 । त्रातरि । निराक्रन्दो जीवलोकः । दारुणे रणे । आक्रन्दे महति जहर्ष राजलोकः । पाश्चात्ये राजविशेषे । आक्रन्दसंदीपितजैत्रयात्रः ॥ [ गोष्पद ] माने । K. K. S. 1, 1 । सेविते देशे । गोष्पदेषु विचरन्न पूयते ॥ 400 ॥

[ शारद ] अधृष्टनवसंवत्सरेष्वन्वेष्यम् । शारङ्गवे देव्यां च । Su. 1 ॥ मुद्गोपि शारद आयुर्वेदे प्रसिद्धः ॥ 401 ॥

[ कुविन्द ] भ्रमिः शिल्पिभाण्डम् । वायकेपि । K. Pr. 141, 6 ॥ [प्रमदा] तरुण्याम् । Ra. 9, 41 । हर्षे पुंसि । Ś. 13, 2 । अधिकमदे त्रिषु । प्रमदद्विरदोपबृंहितः ॥ 402 ॥

[ उपनिषद् ] त्रयेपि । M. M. 14, 3 । रहःशब्देन रहसि भवं यस्तूच्यते ॥ [ शतह्रदा ] शतह्रदेन्द्रायुधभीमदर्शन इत्यादौ द्वयेपि ॥ [ तमोनुद ] त्रयेपि । उदिते तमोनुदे हि प्रभवति न तमः क्वचित्स्थातुम् ॥ 403 ॥

[ समर्याद ] मर्यादासहिते । K. Pr. 121, 3 । अभ्यर्णे निकटम् ॥ [ अववाद ] निन्दायाम् । दुष्टोयमववादस्ते ॥ [जनपद] देशे । H. Ch. 106, 5 । जने । Ra. 9, 4 ॥ 404 ॥

[ विष्णुपद ] गङ्गायां हर्यङ्घ्रौ च । स्नात्वा विष्णुपदीतोये याति विष्णुपदं पुमान् । आकाशे विटपे लोकमात्रे च । भ्रान्त्वा विष्णुपदं प्रयाति शनकैरस्ताचलं भास्करः ॥ [ अभिमर्द ] युद्धे । युक्तं° Mh. 4, 136 । पीडायाम् । तीव्राभिमर्दपरिहारनिविष्टबुद्धेः ॥ [ विशारद ] द्वयेपि । Su. 1 ॥ 405 ॥

[ कोकनद ] इयेपि । फुल्लकोकनदकान्तितस्करी ॥ [ परिवाद ] वादनोपाये । Śi. 6, 9 ॥ [ अष्टापद ] हेमनि । Ku. 7, 10 ॥ 406 ॥

शारिफले । B Ch. 10, 11 ॥ [ अपवाद ] गर्हायाम् । जनापवादादपरज्यति श्रीः । बाधके । Ku. 2, 27 । बाधने । दुःखापवादाय भवन्ति शत्रवः ॥ 407 ॥

[ ऋद्धि ] लक्ष्म्याम् । Ku 7, 52 । प्रभावे । K. K. S. 1, 8 । अतिशये । Bh Ś 28 ॥ [ व्याधि ] आमये । Su. 1103 ॥ 408 ॥

[ मधु ] वसन्ते । Ku. 3, 21 । दैत्यभिदि । त्रायन्तां वो॰ Dhv. 1 । चैत्रे । Ra. 11, 7 । मद्ये । Ś 10, 3 । पुष्परसे । मधुपिपासुमधुव्रतसेविभिः c. V K. V, 2, 14, C. । क्षौद्रे । यन्माधुर्यं मधुनि त्रिदशेन्द्रत्र तन्नैव वेधाः । मधुरे । *मधुनि विमले मद्ये चेतो न कस्य विभास्यति* ॥ 409 ॥

[ आधि ] बन्धके विनिमयस्थापिते वस्तुनि । आधिः सीमा बालधनं निक्षेपोः [ sic ] स्वामिविक्रय॰ c M S, 149 । व्यसने । Me. 86 । चेतसः पीडायाम् । त्राधि मामाधिपीडितम् । अधिष्ठानेन्द्रेष्वम् ॥ [ विधु ] विष्णौ । विधुर्दानवनारीणां वैधव्यव्रतदीक्षकः । शशिनि । Śi 2, 61 ॥ [ बाध ] दुःखे । प्रशान्तबाधं दिशतोभिरक्षयेत् । निरोधे । निर्बाधे विधुरेप्यधीर इति मां येनाभिधत्ते भवान् ॥ 410 ॥

[ *सिन्धु* ] नदभिदि । Ku. 3, 6 । देशभिदि । स्फूर्जत्सिन्धुरभङ्गुरे रणमुखे जित्वा भटान्सैन्धवान् । अब्धौ । त्वत्स्मृत्या तु मयि लक्ष्मीवोप्यन्धुतामेति सिन्धुः । सरिति । Pa. 1151, Z D. M. G. 36, 535, 2 ॥ [ विधा ] विधौ विधाने । Ra. 1, 94 । प्रकारे । M. St. 2 । गजान्ने वेतने च । स्त्र॰ Mb. 2, 245 ॥ 411 ॥

[ वधू ] जायायाम् । Ku. 6, 92 । स्नुषायाम् । Ra. 1, 65 । स्त्रियाम् । M. M. 154, 1 । प्रियङ्गुलता ॥ [ निधि ] निक्षेपे । अनिक्षिप्ते निधौ यत्र विवादः संजायते । गूढार्थे । तस्य शङ्खनिधिन्यायो न कथं पर्यवस्यति । स्थाने । त्वं तार्थविधिगसामसहना नानोन्नता सा पुन. ॥ [ श्रद्धा ] इयेपि । Ra. 2, 16 ॥ 412 ॥

[अन्ध] तमसि । अन्धत॰ Mh 2, 234 । जले । आदरेण धृतिं तन्वी सा हमन्धान्धकेलिषु । अदृष्टौ । भुत्वापि नाम बधिरो दृष्ट्वाप्यन्धो जडो विदित्वापि । अज्ञानेऽपि ॥ निद्रासान्ध इत्यादौ इत्यादौ नृपघातात् c Dhv 63, 3, Mh 2 234 ॥ [सुधा] इष्टेपि । Ra 14, 52 ॥ [शुधा] मक्षोले । V Ś III 2 । अमृते ओषधिभेदे च । सुधासारस्यन्दी शिशिरकिरण चम्पकदल ॥ 413 ॥

[विधि] विधायके वाक्ये विधाने च । Ku 5, 32 । दैवे । K Pr 237, 2 । सहरि । कोयं विधेः प्रक्रम K Pr 54, 2 or M M 183, 4 ॥ [श्राद्ध] हव्यकव्यविधौ दैवे पित्र्ये कर्मणि । M 8, 145 । श्रद्धासमन्विते । श्राद्धेयान-मूपश्च c M 4, 158 ॥ 414 ॥

[संधि] भगे सुरङ्गायां च । संधिं भित्वाविशद्धोरश्छिद्रान्वेषणतत्परः । संधाने । दूतोऽङ्ग कामकलहेषु विसर्जनीयः संधिः कथं नु सखि तत्र स यत्र तुभ । गुणभेदे । संधिं करोतु भवतां नृपतिः पणेन ॥ [गोधा] तले ज्याघातवारणे । शरासनाभ्यासविधौ समाप्ते क्षितेश गोधा मकरध्वजेन N Ch 1, 28 । निहाका पञ्चनखो बिलेशय प्राणिविशेषः । यथा । गोधा लङ्गलबद्धेवाक्षिप्यमाणा बलीय-सेत्यादौ ॥ [बुध] विदुषि । Dhv 2, 1 । ग्रहामरयोः । Ra 1, 47 ॥ 415 ॥

[राधा] कृष्णभार्यायाम् । Git 1,1, d । शरव्ये । राधायन्त्रं रचयत पुन-र्विद्धगप्यस्तु विद्धाम् [?] । कर्णमात्रादि । Ki 3, 21 ॥ [वृद्धि] वर्धने । A S 70 9 ॥ 416 ॥

[सिद्धि] निष्पत्तौ । Ku 3, 57 ॥ [बन्ध] खेदे । बिभेद नो तां प्रति तस्य बन्धः । आधिर्विनिमयस्याप्य वस्तु । बन्धने रचनायां च । H Ch 3 3 । वृन्तेऽपि । Me 10 ॥ [स्कन्ध] स्कन्धावलम्बी भगवानेष बालदिवाकर इत्यादौ वातनियताश्रयौ । वातस्कन्ध इति प्रसिद्धः । अंसे च । आदिमहणादीना-रादिनियताश्रयौ ॥ 417 ॥

राजनि । विवेश सहसा तत्र स्कन्धावारमवारित । अत्र हि स्कन्धं राजान-मावृणोतीति स्कन्धावारः सेनासंनिवेश । तरुजङ्घायाम् । Ku 3 26 । समूहे । Śi 2 28 ॥ [वीरुध्] इयेपि । M M 305 3 ॥ [अर्ध] खण्डे । Me 55 । समंशके । Si 9, 29 ॥ 418 ॥

[ बुद्ध ] दोषज्ञः पण्डिते । सुगते । बुद्ध सधर्ममथ सार्थगणं प्रणम्य ॥ [ शुद्ध ] एकस्मिन्नसहाये पूते च । K Pr 363, 9 ॥ [ वृद्ध ] ह्येपि । अनु° Mh. 2, 247 ॥ [ साधु ] शोभने । Ku 1, 5 ॥ 419 ॥

वार्धुषिर्वृद्धिजीवी । सज्जने । तत्साधवो ननु विदन्ति वदन्ति° Su. 271 ॥ [ सिद्ध ] देवविशेषे । Ku 1, 5 । निष्पन्ने । M. St 15 । पूज्ये । अवाप्त° Mh 2, 251 ॥ [दिग्ध] विषलिप्ते शरे । अथ तैः परिदेविताक्षरैर्हृदये दिग्धफलैरिवार्दित c. Ku 4, 25 । लिप्तमात्रके । M M 54, 5 ॥ 420 ॥

[मुग्ध] मनोहरे । M M 51, 2 । योषिति । दीप मुग्धा वयमरुता [sic] यत्र शान्ति नयन्ति c Mh 2 242 ॥ [विद्ध] सूच्यादिभिन्ने । विन्यस्तवैडूर्यशिले च तस्मिन्नाविद्ध° c Ku 7, 10 । सम्यग्विद्ध तु तत्तास्मिन्नित्यादावादिमहगाद्रसादिष्वप्यनेपि । सादृश्येन्वेन्यम् । क्षे । किमिव हि न विनेतुं रजते [ sic ] हन्त विद्धाः c. Mh. 2, 245 ॥ 421 ॥

[ गन्ध ] घ्राणग्राह्ये । यद्गन्धान्धं भ्रमरपटलम् । स्वल्पे । जलदगन्धिरराजत सानुमान् । अल्पे जलदा यत्र स जलदगन्धिरिति व्युत्पत्त्या । द्रव्ये । गान्धिकैर्विपणयो विराजिताः । अत्र हि गन्धशब्दस्तद्वति वर्तते । संबन्धमात्रके । वशानागौ सगन्धाल्पकलभानुगताविव ॥ [ लुब्ध ] स्पृहावति । Ku. 1, 34 । मृगयौ ॥ नेपि कूरचमूर° Su 1016 c Bh. S. 87 ॥ 422 ॥

[ मागध ] वन्दिनि । Ś 11, 1 ।पिप्पली द्रव्यभेदः । यूथिका हरणिका अत्र मागधीशब्दः ॥ [ न्यग्रोध ] व्यामे प्रसारितकरद्वयवलिते । न्यग्रोधभेयवतुरभनिनम्बविम्बा ॥ 423 ॥

[ प्रबोध ] जागरे उद्घाटे च । सुखप्रबोधगलिता सुवर्णघटनोज्ज्वला c H. Ch. 7, 1 । उद्घाटोर्थावगम. ॥ [ उत्सेध ] वपुषि । स्थूलोत्सेधव्यवहितरविस्यन्दनः कुम्भकर्णः । उन्नतौ । Ku. 5, 8 ॥ [ विवध । वीवध ] पर्याहारे अध्वनि च । Ś 2, 64 । पर्याहारस्तृणजलाद्यादीनामन्यत आनयनम् । भारे । H. Ch. 13, 11 ॥ 424 ॥

[ परिधि ] उपसूर्यके मण्डले । परिविमुक्त इवाहिमदीधितिः c. Ra 8, 30 ॥

[ समाधि ] ध्याने । Ku 3, 40 । नीवाकः । नियतं वचनम् । नियमे । यदा फलं सर्वसमाधिसाधनं° c Ku. 5, 18 । समर्थनेपि । कृतसमाधिरपि चपलः ॥ 425 ॥

[ प्रणिधि ] प्रार्थने । प्रणिधिवशादुपजातसत्प्रभावः । चरे । Ku. 3, 6 ॥ [ अवधि ] परिच्छेदे । Me. 81 । विलेन्वेष्यम् ॥ [ अगाध ] अतलस्पर्शे । अगाधसंशयाम्भोधिसमुत्तरणसाधनी । गर्ते । दुष्टा° Mh. 3, 333 ॥ 426 ॥

[ उपधि ] व्याजे । Ki. 1, 45 । रथाङ्गं चक्रनाभ्यन्तःप्रवेशी काष्ठविशेषः ॥ [ विबुध ] द्वयेपि । K. Pr 255, 5 ॥ [ आनद्ध ] द्वयेपि । आरब्धानद्धतूर्यध्वनिमुखरमुखा रेजुरुच्चा निवासाः ॥ 427 ॥

[ उपाधि ] धर्मचिन्तायाम् । विनोपाधेः शास्त्रं तृणतुषबुसप्रख्यमखिलम् । कुटुम्बव्यापृतेन्वेष्यम् । विशेषणोपार्जनयोः । उपाधि° Mh. 3, 335 ॥ [ प्रबुद्ध ] ज्ञानिनि जाग्रति च । प्रबुद्धः सर्वदा तिष्ठेत् ॥ 428 ॥

[ संसिद्धि ] सम्यक्सिद्धौ । संसिद्धिसिद्धविभवा मुनयः प्रयाताः । स्वभावे । संसिद्धि° Mh 3, 313 ॥ [ संनिधि ] प्रत्यक्षे । यातः सं° Mh. 3, 313 । संनिधाने । Ra. 7, 3 ॥ [ निरोध ] नाशे । स्थिति° Mh. 3, 338 । रोधे । Ku. 3, 48 ॥ 429 ॥

[ निषध ] कठिनेन्वेष्यम् । राजभेदे नगान्तरे च । Ri 18, 1 ॥ [ कबन्ध ] द्वयेपि । स्फूर्जत्कबन्धविधुरारवपूरिताशं संग्रामवारिधिमवलोक्य न दृप्यते कः ॥ 430 ॥

[ आबाध ] द्वयेपि । आबाधविधुरे चित्ते धृतिः कस्य न हीयते ॥ [ संबाध ] योनौ । करिहस्तेन संबाधं विलोडयेत् c K. Pr. 190, 1 । सङ्कटे । ययावसंबाधसुखेन मार्गम् c Ri. 2, 72 ॥ [ विलब्ध ] द्वयेपि । Śā. 39 । इतोनन्तरमप्रष्टव्यावधि त्रिषु ॥ 431 ॥

[ आविद्ध ] द्वयेपि । Vik. 115, c ॥ [ प्रसिद्ध ] द्वयेपि । Ku. 5, 9 ॥ [ विरुद्ध ] वैरिणि । त्वद्विरुद्धवनितासुसततिः । विगुणे । नश्येद्विरुद्धाचरणेन बुद्धिः ॥ [ दुर्विध ] द्वयेपि । दुर्विधेषु विनयो न शोभते ॥ 432 ॥

[ अवष्टम्भ ] त्रयेपि । Mh. 4, 149 ॥ [ ब्रह्मबन्धु ] अधिक्षेपे । आ दुरात्मन्मुनिखेट ब्रह्मबन्धो c. H Ch 11, 14–12, 1 । ब्राह्मणनिर्देशे । ब्रह्मबन्धुरयमागतोऽतिथिः ॥ 433 ॥

[ अनुबन्ध ] दोषोत्पादे । महतां नास्ति कदाचनानुबन्धः । प्रकृत्यादेर्वितुमत्ययादिमध्याय प्रयोगं नार्हति सोऽनुबन्धः । मुख्यानुयायिनि शिशौ चोदाहरणमन्वेष्यम् । प्रकृतस्यानुवर्तने । Ra 1, 64 ॥ 434 ॥

[ महौषध ] एते द्रव्यभेदा महौषधाख्याः ॥ 436 ॥

[ पृश्नि ] अल्पतनौ । पृश्निर्वरवरमुख्यसेविते राजवेश्मनि विवेश सङ्कटे । रश्मौ । अभ्रुवन्ति रविपृश्नयो रसम् । वर्णभेदे ईनद्रक्के । अल्पतनुवर्णयोस्त्रिलिङ्गः। रश्मौ पुंसि । गवि । पृश्नयः पनुरपः समागताः ॥ 437 ॥

[ यक्ष्मन् ] व्याधिभेदे । यक्ष्मणापि परि° Ra 19, 50 v. l. । यक्ष्मप्रसिद्धः ॥ [ मुनि ] बुद्धे । मुनेर्मतं कस्य न माननीयम् । ऋषौ । Ku. 3, 24 ॥ [ शुष्मन् ] वह्नौ । शुष्मणि प्रणयनाभिसंस्कृते c. Śi. 14, 22 । बले । कः सहेत तव शुष्मसोष्मणः ॥ [ शृङ्गिन् ] मतिविशाविषयोरिन्नन्त एव पुंलिङ्गः । शृङ्गी विषं वत्सनाभोद्य इति निदर्शनात् । केचिच्छृङ्गीशब्दमनयोरीकारान्तं मन्यन्ते । तत्पक्षे गान्तेषु स्त्रीलिङ्गो द्रष्टव्यः ॥ 438 ॥

दान्ते पर्वते च । आरुह्य सौधधवलं शृङ्गिणं व्यहरद्धरः । शृङ्गवति । Sp. 3214 ॥ [ हनु ] सृक्कणि । Su. 1677, d ॥ [ जटिन् ] उभयत्रापि । निःसृता मन्मुखाम्भोधेरपूर्वेयं सरस्वती । स्थाणुं त्वां जटिनं प्राप्य सामरस्यमुपैति या ॥ व्रतिनि । जटी मुण्डी शिखी वापि यत्र तत्राश्रमे रत. । पञ्चविंशतितत्त्वज्ञो मुच्यते नात्र संशयः ॥ 439 ॥

[ घन ] मेघे । Śi. 1, 7 । मूर्तिगुणे काठिन्ये । पेतुर्जनादभ्रनादिवापः । घनादभ्रादिति इत्यर्थः । विस्तारे । अर्धैकादशपुरुषो घनो भवेन्मण्डले तु रथचक्रे । लोहमुद्गरे । अपतत्स घनैरिवाहतः ॥ अथ सुषिरघनानद्धवाद्यध्वनिरहितेन हि रङ्गमङ्गलेनेत्यादौ वाद्ये नपुंसके । अन्यत्र तु पुंसि । मूर्तिनिरन्तरे कठिने । Śi. 5, 29 ॥ क्व प्रस्थितासि करभोरु घने निशीथे Sp 1991, धर्मभिर्घनतमोमलीमसैः Bh. Ś. 6 इत्यादौ मूर्तिमोनैरन्तर्यमात्रे ॥ 440 ।

[ इन ] प्रभौ । Ra. 9, 5 ॥ [ राजन् ] प्रवेपि । राजा राजति राजवत् ॥ [ तनु ] स्वचि । तरुतनुभिः कृतयज्ञसहतिः । देहे । Si 1, 23 । तनुणे । Sp 4554 ॥ 441 ॥

[ पर्वन् ] तिथिभेदे प्रतिपत्पञ्चदश्यन्तरे । पार्वणेन शशाङ्केन । क्षणे उत्सवे । विलोक्य° Mb 2, 269 ॥ [ वर्त्मन् ] अध्वनि । Su. 2641 ॥ [ब्रह्मन्] वेदे । Ku 6, 16 । तत्त्वे । Bhag 4, 24 । तपसि । Bhag. 6, 14 । विप्रे । Pr P. 5 ॥ 442 ॥

[ पक्ष्मन् ] अक्षिलोम्नि । Ku 5, 24 । किञ्जल्के । कुसुमैस्तनुलग्नपक्ष्मभिः कुसुमैर्वोरिव यस्य सायकैः । निसर्ग° Si 1, 8 इत्यादौ आदिपक्ष्मणाक्षिलोममात्रेपि ॥ [ आत्मन् ] यत्ने । Ra. 7, 12, Ku. 7, 64 । धृतौ । अवष्टभ्यात्मनात्मानं स्वं सारं वक्तुमर्हसि । बुद्धौ । Ku. 5, 76 । स्वभावे । न सन्ति याथात्म्यविदः पिनाकिनः c. Ku. 5, 77 । ब्रह्मणि वर्ष्मणि शरीरे च । Ku. 3, 50 ॥ क्वापि पुत्रेपि दृश्यते । Ku. 2, 61 । तथा । आत्मा वै पुत्रनामासीति निदर्शनात्पुत्रे c. Mahâbhâr. 1, 74, 63 ॥ 443 ॥

[ वर्ष्मन् ] देहे प्रमाणे च । व्याप्तं व्योमनि वर्ष्मणा यमपुरद्वारार्गलादारुणौ । आकारे सुन्दरे । वर्ष्मणा विदधती जगज्जयम् ॥ [ ग्रावन् ] दृषेपि । अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ॥ 444 ॥

[ शिखिन् ] वृक्षे अग्नौ च । शिखिमूलानि शिरसी निहन्ति चित्रम् । कुक्कुटे । शिखिकुलकूजितसुभगे । बर्हिणि । Me 101 ॥ [ सादिन् ] हयेपि । सादिभिः सुविहितेव रथाश्वे ॥ [ वाजिन् ] अश्वे इषौ च । युक्तं चक्रुर्वाजिनो वाजितायाः c. Si. 18, 13 । पक्षिणि । वाजिनो वियति संभ्रममापुः ॥ 445 ॥

[ सीमन् ] स्थितौ । अनुल्लङ्घितसीमानः सागरा इव साधवः । क्षेत्रे । अथामी सीमानः परिणतशरच्छालिसुभगाः । अवधौ । Bh. 1, 8 । मार्गविषये । यत्राज्ञातचरश्चिरान्नयनयोः सीमानमेति प्रिय ॥ [ लक्ष्मन् ] अग्र्ये प्रधाने । दृष्ट्वैव तं सूर्यकुलैकलक्ष्मा । चिह्ने लाञ्छने । Su. 1343 ॥ [ धामन् ] गृहे । Ku. 2, 1 । देहत्विट्प्रभावेषु । आत्मा° Mb 2, 266 ॥ [ धन्वन् ] स्थले ।

नीलेषु धन्वसु लुनन्ति नदन्ति दान्ता भूमिं खनन्ति रभसान्निशितैः खुराग्रैः । धनुषि । कुन्तवन्त विनद्यत्त्रिशितशरैर्दर्पोद्धुरान्सिन्धुराम् ॥ 446 ॥

मरौ । अन्वानि तृषित पुरुषो रश्मिषु तोयाशया पतति ॥ [ स्वन ] इयेपि । A N 167, c Dhv 72, 4 Su 2070 ॥ [ सून ] पुष्पे । S 3, 17 । वधस्थाने । M 3, 65 । जिह्वातले । सूना° Mh 2 286 ॥ 447 ॥

पुष्पितेन्वेष्यम् ॥ [ चक्रिन् ] अहौ । पदा स्पृशन्ति सहते न चक्री । रथे । वेगा° Mh 2 209 । तैलके । दशासूनासमश्चक्री c M 4, 85 ॥ [ नर्मन ] मनो । कर्मणे भवति मर्म सर्वथा । सुवर्णे । भाति मर्म परिकर्मनर्मदम् ॥ [ चर्मन ] फल्के । S 18, 21 । त्वचि । Su 803 ॥ 448 ॥

[ स्वामिन् ] इयेपि । मतिइतदुग स्वामी ॥ [ जन ] इयेपि । Su 1141 ॥ [ जनी ] कन्याम् । यानेति जन्यान° Ra 6, 30 v l ॥ [ज्योत्स्नी] चन्द्रयुताया रात्रौ । V S III, 1 ॥ 449 ॥

[ अर्वन् ] इयेपि । वल योधा स्थिराणि शत्रोरिव महीपते ॥ [ प्रेमन् ] स्नेहे । Sp 1939 । नर्माणि । दृढस्थेमा प्रेमा रमयति मनो मार्गविधुरम् ॥ [ स्वैरिन् ] मन्द शनैर्गामी । स्वच्छन्दे । बम्भ्रम्यन्ते यनभुवि सदा स्वैरिणो वैरिणस्ते ॥ [ श्येन ] श्वेते । श्येनीभि सुरसिन्धुरोधसि तरुच्छाये कृत मण्डलम् । विहंगमे शाकिकाख्ये । श्येनावदाते चकिता वनर्वर्तिका c M. M 286, 7 ॥ 450 ॥

[भानु] इयेपि । Su 1 ॥ [ वन ] काननतोरयो । सदृशे वनवृन्दाना कमलाना तदीक्षणे c Mh 3 622 । समूहे । नननलिनवनच्छाया धत्ते विभुरमरभुवि । पर्वते । Nag 4 ॥ [ तान ] तात्पर्ये । त्वदेकताना तनुना तनोति सा । गीतविशेषे । तानास्त्वेकोनपञ्चाशत् ॥ 451 ॥

[ रत्न ] इयेपि । Ku 1, 3 ॥ [ यान ] गमने । दिनै कतिपयैर्यान जीवितस्य विनिन्द्यताम् । युग्ये । Ra 6, 10 । नृपगुणभेदे । यान समाचरेच्छक्ती ॥ [ धेनु ] दोग्ध्याम् । अजधेनुभि सह समावसेत्स्वयी । गोमात्रे । Ra 11, 74 ॥ 452 ॥

[ क्षुण्ण ] द्वयेऽपि | Kutt 304 || [ विन्न ] अनिर्विण्णो विन्नो यदि भवति क्षुण्णः स्मरशरैरित्यादौ लब्धे विद्लृ लाभे इत्यस्य | अन्यत्र विद विचारणे || [ अर्थिन् ] द्वयेऽपि | Sp 3336 || [ स्थान ] स्थितौ भावमात्रे | स्थानं यद्यपि ते नास्ति विषयावेशचञ्चलम् | अवकाशे आस्पदे | Ku 8, 33 || 453 ||

सादृश्ये | धत्ते पितृस्थानतया यः स्नेहं सर्वेषु जन्तुषु | गीतविषये | स्थानप्रदायित्व° c Ku 1, 8 | योग्ये | स्थानमेतदुचितस्य वस्तुनः | प्रसङ्गे | दर्भाणां स्थाने शरैरास्तरितव्यम् || [ भोगिन् ] वैयापृत्यकरो व्यावहारिकः | व्यावहारिकभुजंगयोः | Bh Ś 37 | राजनि | अनयेन नदन्ति भोगिन इत्यादौ || 454 ||

[ ज्योत्स्ना ] ज्योतिष्मत्यां व्यभ्रायां रात्रौ | ज्योत्स्नासङ्गमसरसुभगे सैकतेस्मिन्सरय्वाः | चन्द्रमसः प्रभायाम् | Ku 1, 25 || [मान] प्रमाणे प्रत्यक्षादौ | मातृमानमिति मेयममीभिरित्यादौ प्रमाणे | प्रस्थादौ | तन्वङ्ग्यो मानमानव्यतिकरविधुराः | आदिग्रहणादुन्मानादयो गृह्यन्ते | चित्तसमुन्नतिश्चित्तोद्रेकः | तत्र पुंलिङ्गः | मन्यतेर्घञि | मानं° Su. 1161 | इत्यादौ || 455 ||

[ नग्न ] दिग्वाससि | Bh II, 4 | वैतालिके | नग्नाः पठन्तु यदि | आदिग्रहणाद्वन्द्यादयः || [ भिन्न ] संस्कृते | Ku. 8, 74 | सस्कृतो विशेषितः | दारिते | भिन्नं भासा ननु हिमरुचेर्दण्डकाण्डं द्विजानाम् | अहमद्य प्रभृत्येव भिन्नो भवद्भ्य इत्यादावन्यशब्दाभिधायकः || 456 ||

[ वान ] शुष्के | Sâ. 37 | शुष्कफले | आवान कस्यचिन्मधु | सीवनकर्मण्यनुसर्तव्यम् | पै — — विशोषणे वेञ् तन्तुसन्ताने इति च धातुद्वयस्य रूपम् || [ योनि ] भगे | Su. 2823 | आकरे | Ku. 6, 18 | आकर उत्पत्तिस्थानम् || [ कृतिन् ] सूरौ | कल्यः कलासु च कृती दृढभक्तिराढ्यः | कृतकृत्ये | Ku 6, 18 || 457 ||

[ स्नान ] सवने अभिषेके | स्नानैर्धूपैस्तथा दीपैर्नित्यमाराधयेच्छिवम् || [ धन ] गोसंघे | धनमाराधयेत्केशवः || [ चिह्न ] पताकायाम् | उच्चचिह्नच्छत्रसमगोचरः | लक्ष्मणि | Ra. 2, 22 | लक्ष्म वस्तुनो विशेषकमभिज्ञानम् || [ अन्न ] भुक्ते | अन्नेन कुक्षेर्द्वावंशौ | अद्यते घासमिति चान्नम् || 458 ||

[ छन्न ] आदिते । Me 18 । रहसि । Sp. 2173 ॥ [ पान ] सदा रक्षस्युर्वीं तदपि च न पानग्रहमितित्यादौ प्रकृतत्वेन रक्षणे ॥ [ दान ] खण्डने त्यागे च । गोत्राणां शतकोटिदाननिरतः । भूमण्डलदानसक्ता इत्यादौ रक्षणे च ॥459॥

संगीयमानत्रिपुरावदान इत्यादौ शुद्धिसम्बन्धाच्छुद्धे कर्मणि c Ku. 7, 48 । लूनौ । नामूल° Mh. 2, 264 ॥ [ हीन ] ऊने । हीनातिमात्रमवशम् । गर्ह्ये । हीनजन्मा स वर्ज्यः ॥ [ रसन ] शृङ्गाररसना नाट्य इत्यादावास्वादने । एवं शृङ्गाररसनं नाट्यमित्यपि ज्ञेयम् ॥ 460 ॥

[ कुहना ] दम्भचर्यायाम् । An IV, 11 । ईर्ष्यालौ त्रिलिङ्गकः । H Ch. 202, 13 ॥ [ शिखरिन् ] तरौ । नास्त्याकाशः किमु शिखरिणां येन ते स्युः प्रलम्बाः । शैले । Su 2030 ॥ [ तरस्विन् ] बलिनि । समरमूर्धनि तेन तरस्विना V. K. 5, 1, 9, C. । वेगिनि । *अवनिमेकरथेन वरूथिना जितवतः किल तस्य तरस्विनः* c. Ra. 9, 11 ॥ 461 ॥

[ विषाणिन् ] करिणि । Śi. 4, 63 । शृङ्गिणि वृषभे । वादे वादिविषाणिनां प्रशमितास्ता दर्पकण्डूतयः ॥ [ अवन ] प्रीणने तर्पणे । तृष्णालोऽहिं मधुकपानमवनम् । अत्र रक्षणादिषु ॥ [ तलिन ] स्वच्छे निर्मले । सौधानां तलिनोदरेषु । अल्पे । तलिनोदरीणां निरन्तरकार्यतानाम् c. Mh. 3, 370 ॥ [ गहन ] गम्भीरे । गहनाशयानाम् । वने वृक्षबहलप्रदेशे । अविशदशनैर्विन्ध्यगहनम् ॥ 462 ॥

[ रोदन ] अश्रुणि नयनजलविमोचनव्यापारे । नेत्रे विरोदनाताम्रे । क्रन्दे । करुणो रोदनध्वनिः ॥[ प्रज्ञान ] बुद्धौ । प्रज्ञानमीदृग्विधमस्ति यस्य । चिह्ने । प्रज्ञानेन वृषेण विद्धि गिरिशम् । भावे करणे च ल्युट् ॥ [ भुवन ] विष्टपे । Ku. 2, 40 । भुवनाभोगभूषणमित्यादौ जलेपि ॥ 463 ॥

[ द्विजन्मन् ] त्रैवर्णिके अण्डजे तारकासु च । Kād. I, v. 13 । त्रय एव वर्णास्त्रैवर्णिकम् । ब्राह्मणक्षत्रियवैश्याः । विनयादिपाठात् स्वार्थे ठक् । दन्ते । सद्य° Mh 3, 375 ॥ [ वर्जन ] परिहारे वर्जने पृथक्करणे । खलानां सुमतिः कुर्याद्दूरादेव तु वर्जनम् । त्यागे । रायामगाहर्जनमर्जितानाम् । हिंसायाम् । न स्यात्कृतौ वर्जनमर्जुनीनाम् c. Mh. 3, 402 ॥ 464 ॥

[ निधन ] कुले । कलिपुरि निधनाधनानि न स्युः । अन्ते लक्ष्यते । अतोऽत्र द्वादश स्थानम् ॥ [ सूचन, °ना ] व्यधने । सीव्येत्तत सूचनया कर्णपालीम् । विश्वस्तेनेन व्यधनम् । सीवनी ॥ अभिनये । सामाजिका सूचनाभिः सर्वे एवात्र रञ्जिता । सञ्ज्ञाक्रियायाम् । नयनसूचनयाप्यवगम्यते किमुत शब्दपरंपरया न किम् । पैशुन्यक्रियायाम् । न सूचनेभ्यो विरमन्ति दुर्जना ॥ 465 ॥

[ जीवन ] रागलभ्याशे जीविते च । H Cl 60, 6 । तोये वर्तने च । नावे मरौ जीवनमेव जीवनम् । वर्तनं जीविका ॥ [ उद्दान ] उद्गमे ऊर्ध्वगमने । उद्दाने वाष्पपङ्क्तेः । चुल्ल्याम् । उद्दानाद्भाण्डमुत्क्षिप्य ॥ सुगन्धिगन्धनद्धो शोषण इति च ॥ [ शयन ] रते । क्रान्ति° Mh 3, 414 । शय्यायाम् । Su 2112 ॥ 466 ॥

[ शासन ] लेखे । Ra 3 68 । लेखो हि संदेशप्रधानः । वस्त्रपट्टादि सर्वं ॥ शास्त्रे । शासनोक्तेन कर्मणा । आज्ञायाम् । Ra 1 30 ॥ [ वर्तनी ] वृत्तौ जीविकायाम् । का वर्तनीमनुसरन्निह साधुमार्गं । मार्गे । V K p 2, 2 ॥ [ तोदन ] व्यथने भर्त्सनादारभ्य लोहितमुत्पादनपर्यन्ते ताडने । साहस तु दमो दाप्य कृते ब्राह्मणतोदने । तोत्रे प्राजनके । नाल° Mh 3, 373 ॥ [प्रसून] उभयत्रापि । Si 1, 66 ॥ 467 ॥

[ छदन ] दले पल्लवे । छदनान्तरितातपास्तरून्स । पतत्रे पक्षे । चरन्ति चित्रच्छदना शिखण्डिनः ॥ [ विलग्न ] लग्ने सक्ते । नमन्ति° Mh 3, 407 । शरीरमध्ये । Ku 1, 39 । मेषादौ । विलग्नभवन गते । तनुस्थे प्राग्लग्नगते ॥ [ सेवन ] प्रभोराराधने । स्वामिन सेवनप्रीता फलन्ति ॥ 468 ॥

सेवनगृहीताना स्वामिपद्माना क्षति क्व दृष्टेत्यादौ सीवनेपि । इत्यादौ पाठो [ sic ] ॥ [ बन्धन ] स्नेहे । किमस्ति मे बन्धनमत्र वस्तुनि । वृन्ते पुष्पनाले । कृत न कर्णार्पितचारुबन्धनम् c Si 345 ॥ [ नलिनी ] पद्माकरे । Ku 4, 6 अब्जे । नयननलिनीनालापीतं° c Su 2007, V A 54, 16 ॥ 469 ॥

[ मैथुन ] सबन्धे । मेखलयोस्तत्र मैथुनं मतम् । सबन्ध श्लेषमात्रम् ॥ [ मिथुन ] उभयत्रापि । चक्रवाकमिथुनानि पीडयन् ॥ मिथुनमुपगतो ब्रह्मणो वधपापेरित्यादौ युग्मरूढ्यैव राशिवाचकत्वम् ॥ [ सेनानी ] गुहे षण्मुखे ।

Ra. 2, 37 । सेनापतौ । Ku. 2, 51 । गुहे पुंसि सेनेशो तु त्रिषु ॥ [ ह्रादिनी ] वज्रे । ह्रादिनीव विवृतस्थितिरेषा । विद्युति । तासामासीत्तमसि शरणं ह्रादिनीनां प्रकाशः ॥ 470 ॥

सल्लक्याम् । ह्रादिनीभङ्गिम् । नद्याम् । श्रान्तो याति त्वरितममरह्रादिनीपार्श्वमद्यतः । मादवति त्रिलिङ्गः । निर्ह्रादिन्या॰ Nâg. I, 12 । सल्लकी ओषधिभेदः ॥ [ अशनि ] वज्रे विद्युति च अशनिः स्त्रीपुंलिङ्गः । वज्रे । Sp 6359 । शम्पायां विद्युति च [५c] । Ku 4, 43 ॥ [ पलाशिन् ] उभयत्रापि । पलाशिनां कः सहते विजृम्भितम् ॥ पलं मांसमश्नाति पलाशानि पत्त्राणि विद्यन्ते यस्य ॥ 471 ॥

[ अरत्नि ] कूर्परे बाहुमध्यसंधौ । छिन्नास्ताः प्रसरन्त्वरत्निभिरपि क्रुद्धा हि वीराङ्कुराः ॥ [ वागिनी ] वागिनी समदस्यतेत्यादौ तन्त्रोक्त्या द्वयोरपि ॥ [ भोगिनी ] द्वयेपि । भोगिनी भाति सुभगा नरेन्द्रास्ते चकासति ॥ 472 ॥

[ प्रधान ] धीमहामात्यात्मद्व । वृत्तिः प्रधानानुगता जनस्य । प्रकृतिसत्तमयोः । Śi 15, prakshiptaśl 2 ॥ प्रधाने हि कृते यत्नः फलवान्भवतीत्यादौ तु गुणापेक्षया दान्ते प्रधाने एव ॥ 473 ॥

[ जघन ] द्वयेपि । जघनमहाहवसरवराः । संनाहः संग्रामैकसात्करणम् ॥ [ व्यञ्जन ] लाञ्छने । अमात्यव्यञ्जना॰ Śi 2, 56 । अत्र हि अमात्यव्यञ्जनं येषामित्यर्थोर्थः । निडाने संस्कारके च । व्यञ्जनैः प्रवृत्ते सुसंस्कृते वागियं रसवती कवेरिव । निडानमक्षरम् । संस्कारकं दध्याद्यवयवा [?] अत्र व्यक्तयः । जात्यभिव्यञ्जकत्वाद्व्यञ्जनशब्दवाच्याः । यथा । सामान्यव्यञ्जने व्यक्तिरित्यादौ ॥ 474 ॥

वादित्रकरणे पुंसि । व्यक्तिर्व्यञ्जनधातुना दशविधेनाप्यत्र लभ्यामुना । तथा च भरताचार्यः । विस्तारकरणश्चैव आविद्धो व्यञ्जनस्तथा ॥ [ कौलीन ] लोकवादे । Me. 109 । पश्वहिपक्षियुद्धे । कौलीनकेलिसमये समये क्षितोभूत् ॥ 475 ॥

[ उद्यान ] राजमार्गवनभेदयोः । उद्यानविहितक्रीडाश्रुडाचुम्बितमस्तका । प्रयोजनेन्वेप्यम् ॥ [ वितान ] करकुके । Ki 3, 42 । क्रतौ । Śâ 83, d । तुच्छे । चित्ते तेतिवितानमारभति चेद्देवं भवानीपतिम् ॥ 476 ॥

मन्दे । पाण्डुत्वादनुमीयते तव सखे चित्तं वितानं मया । शून्येपि । Śi. 3, 50 । विस्तृतौ विस्तारे ना पुंलिङ्गः । प्रसिद्धमातानवितानत्वात् ॥ [उत्थान] गृहान्तोद्यमपौरुषेषु । उत्थाने सुजने जनस्य रमते चेतो यथा सद्मनि । तन्त्रे राष्ट्रचतुरङ्गसाधने । उत्थाना° Mh 3, 351 । संनिविष्टोऽस्म आसीनस्य ऊर्ध्वक्रिया ॥ 477 ॥

[व्युत्थान] प्रतिरोधे प्रत्यक्षतद्योगादेश्चलने । प्रत्याहाराद्यसंस्पृष्टो विशेषोस्ति महानयम् । योगिभ्यो भक्तिभाजो यद्व्युत्थानेपि समाहिताः ॥ विरोधे । व्युत्थान° Mh 3, 412 ॥ [अञ्जन] कज्जले । Ku 1, 47 । आञ्जनेयेन तस्य तत इत्यादौ कपेर्हनूमतो माता अञ्जना ॥ अञ्जनभूभृद्भाति यथायं परिपतदभिनवदिनकरकिरण इत्यादावञ्जनसंबन्धादेव तद्युक्ते पर्वतविशेषे ॥ 478 ॥

[प्रभिन्न] अनेकतां प्राप्ते । M. St 7 । जातमदे उत्पन्नमदे हस्तिनि । Ku. 5, 80 ॥ [लाङ्गलिन्] हयेपि । लाङ्गलि° Mh. 3, 400 ॥ [जनन] कुले जन्मनि च । जननजने नयनानां ह्लादकमाप्याय नास्ति संतोषः ॥ 479 ॥

[वर्धन] छेदे । M. 2, 29 ॥ [अर्जुन] वृक्षभिदि । M. M. 313, 5 । गवि । अस्ते पुञ्जितमर्जुनीकुलमपरतम्ने पलाशोत्कर इत्यादौ [sic; c. Mh. 3, 453] ॥ 480 ॥

शुक्ले । Śi. 1, 6 ॥ [केतन] गृहे । जनस्य साकेतनिकेतनस्य c. Ra. 5, 31 । केतौ ध्वजे । Ku 5, 84 । निमन्त्रणे । पूर्वेषुः° Mh. 3, 360 ॥ 481 ॥

[समान] सति साधौ । समानः कोपि जायते । सह मानेन वर्तत इति कृत्वा ॥ तुल्ये । समानान्सुहृदश्च बन्धुभिः । एकस्मिन्नसाधारणे । समानस्थानलाभेन हर्षमापत् ॥ [विमान] व्योमयाने । Ra. 14, 20 । ददृश समुत्सुद्गविमानभाज इत्यादौ सप्तभूमे वेश्मनि । सप्त भूमयः कक्ष्या यस्य । कृष्णो° Kârikâ Pâ 5, 4, 75 इति व्युत्पत्त्या ॥ 482 ॥

[तपन] अर्के । तपति ललाटं तपस्तपनः c. H. Ch. 51, 5 ॥ [प्राचीन] प्रान्ततो वृतौ । प्राचीनप्रतिरुद्धः ॥ 483 ॥

प्राचीनमलकोपमानेत्यादौ प्राग्भवे ॥ प्रान्ततो वृतिः पर्णिकाख्या । प्राग्भवे दिशि देशे काले वा । विभाषा° Pa 5, 4, 8 इति खप्रत्ययः ॥ [प्रच्छन्न]

धन्तर्हारे खडक्किकायाम् । अनेन संजनेन प्रच्छन्नेन निर्गत्य । रहसि । Sp 2173 । आदिते । भ्रमन्प्रच्छन्नमस्माकरन् । गूढे । प्रच्छन्नं वहति दृढं चिरं च वैरम् ॥ [श्वसन] महति वायौ श्वासयुक्ते च । श्वसनमरुजवं [?] संत्यजोर्ध्वनवृत्तम् ॥ 484 ॥

कानाग्निः श्वसनेन दीपित इत्यादौ मरुवकेपि । मरुवकं पुष्पभेदः ॥ [पूतन ] भूतभेदे स्त्रीपुलिङ्गः । M M 342, 4 ॥ [स्यन्दिनी ] लालायाम् । तं स्यन्दिनीलिप्तमुखं कुमारम् । निम्नगायाम् । सा वृन्दारकवृन्दवन्दितजला संक्रन्दनस्यन्दिनी ॥ 485 ॥

[ गोस्तनी ] गोस्तन्यां [sic] कपिलायां द्राक्षायाम् । सजातो° Mh. 3, 364 । [ गोस्तन ] हारभेदे । तस्या. कम्पितगोस्तनस्तनतटी ॥ [ धमनी ] नडीनडयोस्तृणभेदयोर्धमनीधमनशब्दौ निघण्टौ प्रसिद्धौ । अग्न्युद्दीपनभाण्डे । मुखेनोपधमेदग्नि धमन्यन्तरितेन तु ॥ [ डयन ] नभोगतौ । K.K S. 1, 67 ॥ 486 ॥

कर्णीरथे । डयनगतः स ददर्श मार्गवृक्षान् । कर्णीरथो दोलाकारो वाहनविशेषः ॥ [ मार्जनी ] पांसुशोधन्याम् । मार्जनीरेणुकेशाम्बु हन्ति पुण्यं पुराकृतम् ॥ [ मार्जन ] उपमर्दे आचमनादिके । ततः कुर्यात्समार्जनम् । उत्पुंसने मस्मादिशोधने । सत्तभिर्मार्जनैः शुद्धचेलोहं [ sic ] विण्मूत्रवर्जितम् ॥ 487 ॥

[ मार्जना ] आसीना किमपि स्थिता ननु सखे मस्तूयतां मार्जनेत्यादौ वाद्यपिण्डयाम् । मृदङ्गमुखे मृदितभक्तादिदाने । तत्परीक्षार्थमादने तूपचाराङ्कुरः ॥ [ कुण्डलिन् ] हयेपि । जात्यैव° Mh 3, 359 ॥ 488 ॥

[तपस्विन् ] शान्ते । Ku. 3, 34 । मत्स्यां निघण्टौ प्रसिद्धः स्त्रीलिङ्गः ॥ [संधिनी ] हयेपि । आविकं संधिनीक्षीरं न भोक्तव्यं द्विजातिभिः c. M. 5, 8 । वृषाक्रान्ता तमगर्भा ॥ 489 ॥

[हायन ] वत्सरे । M. M. 152, 1 । अर्चिषि । तेनिक्रमान° Mh 3, 429 ॥ [क्रन्दन ] हयेपि । किं° Mh. 3, 355 ॥ [ व्यसन ] विपत्तौ मरणे । रिपुव्यसनदर्शितः पृथुलहर्षवाष्पाकुल. । अशुभे । व्यसने यो जयेच्छत्रुन् । भ्रंशे । नाशे पाते च । Ki. 3, 45 । पानस्त्रीमृगयादिषु । राजा दुर्व्यसनैर्विहीनः c. Ra. 18, 13, K. N 15 1 ॥ 490 ॥

दैवानिष्टफले। व्यसनिनं वातुं समर्थं जनम्। सक्तौ। वनमवनं व्यसनमव्यसनम्। क्रोधदूषणं क्रोधजो दोषः। वाक्पारुष्यदण्डपारुष्यार्थदूषणानि ॥ [ साधन ] निवृत्तौ निवर्तने। विधानमारम्भमसाधनं वृथा। दापने। साधनं द्विगुणं कार्यमृणिकस्योत्तमे दमे। सिद्धौ निष्पत्तौ कर्तृव्यापारे। स्वार्थ° Mh. 3, 425। गतौ। गङ्गातीरे साधनं सिद्धिहेतोः। अनुगमे अनुव्रज्यायाम्। गुरूणां साधनं कार्यमुदकान्ताग्निति स्थितिः c Śa. 54, 21, Bhâshya Pâ. 1, 4, 56। धने। तपस्वि° Mh 3, 426 ॥ 491 ॥

उपाये उपकरणे। Ku 5, 52। कारणे। Ra 3, 13। सैन्यरूपे उपकरणे। Ra 4, 36। कारके क्रियाभिनिर्वर्तके। Si. 9, 6। अभूव° Ku. 5, 22 इत्यादि च सर्वमुपायग्रहणात्स्वीकृतम् ॥ मृतसंस्कारे दाहादौ। शरीरसाधनं कार्यम्। वधे। अहन्यहनि भूपालः कुर्याद्घोरस्य साधनम्। व्यञ्जकवृत्त्या मेढ्रे। न साधनोपरतिर्या स्यात्फलत्वरतिदायिनी ॥ [ अयन ] पथि। स्निग्धस्य सूक्ष्मेष्वयनेषु लीनं स्वेदस्तु दोषं नयति द्रवत्वम्। सूर्यस्य दक्षिणगतावपि। Ra. 16, 44। सूर्यस्योद्गतौ। उदगयने शशिसूर्यौ चक्रेऽन्यस्निग्धविपुलाश्च ॥ 492 ॥

[ पवन ] कुलालपाकस्थाने। अग्नेस्तेजस्तापैरभिनिवेश्य पवने महावीरम्। प्रभञ्जने। Śi. 4, 36 ॥ [ सवन ] सोमस्यौषधिराजस्य निर्मथने। एतस्मिन्सवनविभूतपापे। स्नाने। मध्यंदिनसवनवेलां नातिक्रामेत्। यजने। H Ch. 16, 4 ॥ 493 ॥

[ वामन ] काव्यालंकारभूरुर्वी वामनेनैव धारितेत्यादौ दिग्गजे। आलंकारिकभेदेपि ॥ विष्णौ। Ra 11, 22। निखर्वे। Ra 1, 3। वामनोलकारभेद° ॥ [ शमन ] अन्तके। असिभुजगविभूषणस्तथासाविरिशमनो जयतु क्षितीश बाहु°। वधे। विवर्जयेच्च° शमनं पशूनाम् ॥ [ जघन ] कटौ। स्फीतमधिमि जघने गुरुपाटलिमि बिम्बाधरे ॥ 494 ॥

पश्चार्धे। पश्यन्ति यत्र रिपवो जघनं हयानाम्। नितम्बाये। Me. 41 ॥ [ कौपीन ] गर्ह्ये। उत्सर्पत्पीनकौपीननाशिताशेषपौरुष°। गुह्ये। Bâ. II, 2। गुह्यस्थे तृपचारात् ॥ [ देवन ] अक्षे। देवनाच्छलकृतो हि किमत्र। व्ययेपि। प्रकटीकृतदेवनान्कुरून् ॥ 495 ॥

[मदन] मधूच्छिष्टे । मदनगोलकमुष्टरदच्छदाः । वसन्तवृक्षयोः । उपययौ० Mb. 3, 389 । मदकारी सामान्येन यः कश्चित्तत्र त्रिलिङ्गः । मधूच्छिष्टं सिथ्यकं [sic] तत्र केचन मदनशब्दमाहुः । तत्र च मद मुचि कल्के इति धातुरन्वर्थः साधकः ॥ 496 ॥

[वेदना] अनुभवे । संमू° Mb. 3, 414 ॥ [यापन] त्यागे । प्रबलशत्रुपराभवशङ्कया यदि करोति धनस्य स यापनम् । वर्तने अतिवाहने । मुक्तवर्धी यत्रतत्रस्थः कुर्याज्जीवस्य यापनम् । यापनं च यापना च ते यापने इत्युभयत्रोभयलिङ्गत्वम् ॥ [कल्पना] कर्तने छेदनक्रियायाम् । श्मश्रुकेशनखदैर्घ्यकल्पना । कर्तने छेदनभाण्डेपि । यावन्न सेव्यते शंभोर्भक्तिः संसारकल्पना । कॢप्ती रचनायाम् । आकल्पकल्पनासज्जाः । उद्देशे ब्राह्मणार्थे वस्तुस्थापने । अर्घपाद्यादिकल्पनाम् । गजसज्जने शृङ्गारणे । कल्पनासज्जसेनानीनीतिबन्धुरबन्धुर इत्यादौ ॥ 497 ॥

विकल्पे । विधूतकल्पनाजालेत्यादौ । आकल्पने । त्याज्याः संसारकल्पनाः । विधाने । दिङ्येयं कल्पना धातुः । विभाजने । विध्यर्थवादमन्त्रार्थनामधेयादिकल्पना ॥ [स्पर्शन] समीरणे । स्पर्शनं हि क उपैति चक्षुषा । स्पर्शे । गोः स्पर्शनं ब्राह्मणतर्पणं च c. Mb. 3, 421 । दाने । स्पर्शनं पुण्यदर्शनम् ॥ 498 ॥

[गन्धन] हयेपि । तद्गन्धनं मोदुरकंधराणां नैवाद्रियन्ते सुजनाः खलानाम् ॥ [संतान] संततौ प्रवाहे । अस्यां° Mb. 3, 423 । देववृक्षे वृक्षसंतानादिपुष्पे [?] । Ku. 7, 3 । अपत्ये । Ra. 2, 65 । गोत्रे । संतान° Mb. 3, 422 ॥ 499 ॥

[स्तनन] कुत्सिते ध्वाने अम्भःस्यशब्दे । स्तननितम्बभरास्तननं मुहुः। देवशब्दे । दुन्दुभिस्तननपुष्पवर्षणैरन्वमोद्यत भवः सुरैरपि ॥ [सज्जन] इभसज्जीकरणे साधौ च । किं दुष्करं भवति सज्जनसंस्कृतानाम् ॥ 500 ॥

पटगुल्मे सेनासंनिवेशविशेषे । सैव्येपि सज्जनमुखे सुखमेत्यधीरः ॥ [चेतन] प्राणिनि । Me. 5 ॥ [तेजनी] मूर्वातेजोवत्यौ ओषधिभेदौ । शाणोपले । केनासिर्वो रणभुवि रसत्तेजनीलीढरुक्ः ॥ [तेजन] वेणौ शरे वा । हिमरति तेजनसरलेन्दुदीकान्ते ॥ 501 ॥

[पिशुन] स्पृहा दुरालभा । दुष्टे जने । Sp. 4931 । सूचके । Ku. 8, 86 v. l. ॥ [वेष्टन] इत्येपि । अस्पृष्टालकवेष्टनौ ॥ [शकुन] इत्येपि । अवामवाशितशकुनसूचितशकुनः ॥ 502 ॥

[वृजिन] केशे । क्वचन विजने कुञ्जवृजिन इत्यादौ । वर्मणि । वृजिनधा-रयान्व्यधादरीन् । किल्बिषे । *Bhag.4,36* ॥ [भूतात्मन्] धातरि । स ते भगवान्भूतात्मा श्वःश्रेयसं दास्यति ॥ 503 ॥

[संस्थान] आकृतौ टङ्के । संस्थानमास्थाय मनो जहार । मूर्त्तौ संनिवेशे च । मालाकार इव स्वयं स विदधे संस्थानमुच्चैर्दिशाम् । चतुष्पथे । स तस्मै अपदिशति अमुष्मिन्संस्थाने हस्तदक्षिणो गृहीतव्य ॥ [विच्छिन्न] इत्येपि । Śr Ch 2, 51 ॥ 504 ॥

[आसन] करिस्कन्धे । आसना° Mh. 3, 349 । पीठे । Ki. 2, 57 ॥ [मलिन] समते । Su. 3049 । एनसि पापे । मलिनैः पापकर्मभिः ॥ [आराधन] साधने । न्यस्या° Mh. 4, 159 । तोषणे । शकराराधनं धनम् । उपासायाम् । Ku. 1, 58 ॥ 505 ॥

[अधिष्ठान] पुराध्यासनयोः । उच्चैस्त्वेकस्तूर्णमस्तापगाभ्य. साधिष्ठानास्ते किमा-श्चर्यमत्र ॥ [आतञ्चन] प्रतीवापे द्रवद्रव्यस्य भाण्डाद्भाण्डान्तरक्षेपे आप्यायने वा । सुधारसातञ्चनवञ्चुवञ्चवचन्द्रांशुशुभ्रीकृतचन्द्रलेखा. । जवने वेगे । आतञ्चनं पञ्चशरस्य बाणाः संप्राप्य शीघ्रं भुवनं जयन्ति c. Mh. 4, 161 ॥ 506 ॥

[आस्कन्दन] रणे । आस्कन्दने° Mh. 4, 162 । आक्रान्तौ बलात्स्वीकारे । एते हठास्कन्दनमन्तरेण रणेषु योग्या न भवन्ति वाहाः । शोषणे शापणे वा । भीष्मा° Mh. 4, 162 ॥ [चित्रभानु] इत्येपि । सांध्य° Mh 4, 173 ॥ [पृथग्जन] इत्येपि । Ki 14, 24 ॥ 507 ॥

[अभिजन] कुले । Ku 1, 26 । जन्मभूमौ । यः कान्यकुब्जाभिजनः स राजा ॥ [समापन्न] इत्येपि । राजा° Mh. 4, 197 ॥ [अपदान] खण्डने । सौन्दर्यमालोक्य विलोलचक्षुषामात्मापदानं विधुना विधीयते । अद्भुतकर्मणि । Ku 7, 48 ॥ 508 ॥

[ निर्वासन ] मारणेपि । मोक्षे चित्तमिव व्यधात्स बहुधा निर्वासनं विद्विषाम् ॥ [ घनाघन ] शक्रे घातुके वा । परमरानवलोकघनाघनाः । मत्तेभवर्षुकाब्दयोः । घनाघना नीलघनाघनमियां प्रियामिमामुत्सुकयन्ति यन्ति च ॥ 509 ॥

[ अभिमान ] अर्थादिदर्पे । Ki. 2, 13 । ज्ञाने । दृढाभिमानेन विना न मोक्षः । प्रणये । प्रिया॰ Mh. 4, 156 । हिंसायाम् । यः श॰ Mh. 4, 156 ॥ [ आवेशन ] आवेशे । दर्पा॰ Mh. 4, 161 ॥ 510 ॥

[ निरसन ] द्वयेपि । निरसनमरिसार्थस्याय चक्रे स तत्र ॥ [ विरोचन ] चन्द्रे । वैरोचने महसि मुक्तशुचश्चकोराः । अग्नौ । दधे विरोचनरुचिं निकरो जटानाम् ॥ [ विश्वकर्मन् ] मार्तण्डे । अम्भानामिव विश्वकर्मकिरणाः । सुरशिल्पिन्यपि । स्वकीयं निन्दति व्याधो विश्वकर्माणमर्जुनम् c. Mh. p. 51, 8 ॥ 511 ॥

[ निर्यातन ] वैरशुद्धौ । निर्यातनं यातनया रिपूणाम् । दाने । निर्यातनं धनततेः स विधाय पात्रे । न्यासार्पणे निक्षेपप्रतिदाने । ज्ञात्वा॰ Mh. 4, 177 ॥ [ अभिपन्न ] अपराद्धे प्रमादवति । अभिपन्नेषुरभूदयार्जुनेपि । अभिग्रस्ते । औचित्यं खलताभिपन्नहृदयः कुर्यात्कथं दुर्जनः । व्यापन्नते । त्राणं यदभिपन्नस्य मतमाहुर्मनीषिणाम् । द्रुते अभिद्रुते । अभिपन्न बलवता दुर्बलं हीनसाधनम् c. Sp. 500 ॥ 512 ॥

[ आयोधन ] निघाते । शस्त्रा॰ Mh. 4, 159 । द्वयेपि युद्धे च । Ra. 5, 71 ॥ 513 ॥

[ सनातन ] नित्ये । K. N. 2, 42 । विष्णौ । ददृशे तेन सनातनः क्षणात् ॥ [ स्तनयित्नु ] द्वयेपि । यत्नोयं स्तनयित्नुना विरचितो मन्ये तदुच्छित्तये ॥ [महासेन] द्वयेपि । अपरित्यक्तकुमारभावेपि महासेन इत्यादौ ॥ 514 ॥

[ आत्मयोनि ] ब्रह्मणि । Ki. 3, 7 ॥ [ विहनन ] पिञ्जे विघ्ने । वने विहननाकुले । वधे । विहननमबुधाः शत्रोरिच्छन्ति पराक्रमान्न बुद्धिबलात् ॥ [ प्रतियत्न ] संस्कारे सतो गुणान्तराधाने । प्रतियत्नमपेक्षते नहि प्रतिभातत्त्वसहोदरी सभा । लिप्सायाम् । मिथ्यैव कुरुते मूढः प्रतियत्नं धनं प्रति ॥ 515 ॥

